# पातञ्जलयोगसूत्रीय

॥व्यासभाष्यस

श्रीताराचरण तर्करत्न

परिशोधिता

॥श्रीयुक्तबाबू अविनाशीलालस्या

ज्ञया

मुन्शी हरिवंश लालेन मुद्रिता

सम्वत् १९३२ सरे



वाराणसी इष्टाराम

यन्त्रालये

लक्ष्मीकुंडे

# पातञ्जलयोगसूत्रीय

॥ व्यासभाष्यस्य

श्रीताराचरण तर्करत्न

परिशोधिता

॥ श्रीयुक्तबाबू अविनाशीलालस्याज्ञया

मुन्शी हरिवंश लालेन मुद्रिता

सम्वत् १९३२ सरे

वाराणसी इष्टारत्न

यन्त्रालये

लक्ष्मीकुंडे

श्री

# श्रीगणेशायनमः

# पातंजलिसूत्रस्य

# व्याख्यालिख्यते

ॐनमामिजगदुत्पत्तिहेतवेवृषकेतवे॥क्लेशकर्मवि
पाकादिरहितायहितायच १ नत्वापतंजलिमृषिंवेः
दव्यासेनभाषितं॥संक्षिप्तस्पष्टबह्वर्थभाष्येव्याख्यावि
धास्यते २॥ ॥इहहिभगवान्पतंजलिःप्रारिप्सितस्य
शास्त्रस्यसंक्षेपतस्तात्पर्यार्थंप्रेक्षावत्प्रवृत्त्यंगंश्रोतु
श्चसुखावबोधार्थमाचिख्यासुरादाविदंसूत्रंरचयां
चकार॥अथयोगानुशासनं॥तत्रप्रथमावयवम
थशब्दंव्याचष्टे॥अथेत्ययमधिकारार्थोऽथैषज्यो
तिरितिवत्तत्वानंतर्य्यार्थः अनुशासनमितिहि शा
स्त्रमाह अनुशिष्यतेनेनेतिव्युत्पत्त्या नचास्यशब्द
मात्रानंतरंप्रवृत्तिः अपितु तत्त्वज्ञानचिख्यापयिषाः

नतरं जिज्ञासाज्ञानयोस्तस्मात् यथाम्नायते तस्मात्
शांतोदांतउपरतस्तितिक्षुः समाहितोभूत्वात्मन्येवात्मा
नं पश्येदित्यादि शिष्यप्रश्नतपश्चरणरसायनाद्युपः
योगानंतर्यस्यचसंभवेपिनाभिधानं शिष्यप्रतीतिप्र
वृत्त्योरनुपयोगात् प्रामाणिकत्वेयोगानुशासनस्यत
दभावेप्युपेयत्वात् अप्रामाणिकत्वेचतद्भावेपिहे
यत्वात् एतेनतत्वज्ञानचिख्यापयिषयोरानंतर्याभि
धानंपरास्तं अधिकारार्थत्वेतु॥ शास्त्रेणाधिक्रिय
माणस्यप्रस्तूयमानस्ययोगस्याभिधानात् सकल
शास्त्रतात्पर्यार्थव्याख्यानेनशिष्यः सुखेनैवबोधित
श्च प्रवर्त्तितश्चभवतीतिनिःश्रेयसस्यहेतुः समाधि
रितिहि श्रुतिस्मृतीतिहासपुराणेषुप्रसिद्धम् १॥ ॥
ननु किंसर्वसंदर्भगतोऽथशब्दोधिकारार्थः तथास
त्यथातोब्रह्मजिज्ञासेत्यादावपिप्रसंगइत्यतआह
अथेति ननुहिरण्यगर्भोयोगस्यवक्तानान्यःपुरा
तनइतियोगियाज्ञवल्क्यस्मृतेः कथंपतंजलेर्योग
शास्त्रत्वमित्याशंक्यसूत्रकारेणानुशासनमित्युक्तं
शिष्टस्यशासनमनुशासनमित्यर्थः यदायमथश
ब्दोधिकारार्थस्तदेवंवाक्यार्थः संपद्यतइत्याह यो
गानुशासनंशास्त्रमधिकृतमिति ननुव्युत्पाद्यमा
नतयायोगोत्राधिकृतोनतुशास्त्रमित्यतआह वे
दितव्यमिति सर्व ...

सतुतद्विषयेणशास्त्रेणकरणेनव्युत्पाद्यः करणगोचर
श्चव्युत्पादकस्यव्यापारोनकर्मगोचरइतिकर्तृव्यापा
रविनक्ष्यायोगविषयस्य शास्त्रस्याधिकृतत्वंवेदि
तव्यं शास्त्रव्यापारगोचरतयातुयोगएवाधिकृतइ
तिभावः अधिकारार्थस्यचाथशब्दस्यान्यार्थनीयमा
नोदकुंभदर्शनमिवश्रवणंमंगलायोपकल्पतइतिमं
तव्यं शब्दसंदेहनिमित्तमर्थसंदेहमपनयतियोगः
समाधिः युजसमाधावित्यस्माद्व्युत्पन्नः समाध्यर्थोनतु
युजिर्योगइत्यस्मात्संयोगार्थइत्यर्थः ननुसमाधिर
पिवक्ष्यमाणस्यांगिनोयोगस्यांगंनचांगमेवांगीत्यत
आह सचसार्वभौमः चस्त्वर्थोगादंगिनंभिनत्ति भूमयो
वस्थावक्ष्यमाणामधुमतीमधुप्रतीकाविशोकासंस्का
रशेषातांश्चित्तस्य तासुसर्वासुविदितःसार्वभौमश्चि
त्तनिरोधलक्षणोयोगस्तदंगंतुसमाधिर्नैवंभूतः व्युत
त्तिनिमित्तमात्राभिधानंचैतद्योगः समाधिरितिअंगां
गिनोरभेदविवक्षामात्रेण प्रवृत्तिनिमित्तंतु योगशब्द
स्यचित्तवृत्तिनिरोधएवेतिपरमार्थः वृत्तयोज्ञानान्या
त्माश्रयाणिअतस्तन्निरोधोप्यात्माश्रयएवेतियेपश्यं
ति तन्निरासायाह॥ चित्तस्यधर्मइति चित्तशब्देनांतः
करणंबुद्धिमुपलक्षयति नहिकूटस्थनित्याचितिश
क्तिरपरिणामिनीज्ञानधर्माभवितुमर्हति बुद्धिस्तुभव
तीतिभावः स्यादेतत्सार्वभौमश्चेद्योगः हंतभोःक्षिप्तमू

ढविक्षिप्ताअपिचित्तभूमयोस्तिच परस्परापेक्षया वृत्ति
निरोधोप्यास्त्विति तत्रापियोगत्वप्रसंगइत्याशंक्य हेयो
पादेयभूमीरुपन्यस्यति क्षिप्तमित्यादि क्षिप्तं सदैव
रजसा तेषुतेषुविषयेषु क्षिप्यमाणमत्यंतमस्थिरंमू
ढंतु तमः समुद्रेकान्निद्रावृत्तिमत् विक्षिप्तंक्षिप्ताद्वि
शिष्टंविशेषोस्थेमबहुलस्यकादाचित्कः स्थेमा सान्वा
स्यास्थेम बहुलतासांसिद्धिकीवा वक्ष्यमाणव्याधि=
स्त्यानाद्यनंतरायजनितावा एकाग्रमेकतानं निरुद्ध
सकलवृत्तिकं संस्कारमात्रशेषंचित्तं निरुद्धंतत्रक्षि
प्तमूढयोःसत्यपि परस्परापेक्षयावृत्तिनिरोधे पारंप
र्येणापि निःश्रेयसहेतुभावाऽभावात् तदुपघातक=
त्वाच्च योगपक्षाद्दूरोत्सारितत्वमितिनतयोर्योगत्वंनि
षिद्धं विक्षिप्तस्यतुकादाचित्कसद्भूतविषयस्थेमशा
लिनःसंभाव्येतयोगत्वमितिनिषेधति तत्रविक्षिप्ते
चेतसि समाधिः कादाचित्कः सद्भूतविषयस्यचित्तस
स्थेमा नयोगपक्षेवर्त्ततेकस्माद्यतस्तद्विपक्षविक्षेपो
पसर्जनीभूतः विपक्षवर्गांतर्गतस्यहि स्वरूपमेवदुर्ल
भंप्रागेवकार्यकरणं नखलुदहनांतर्गतं बीजंचिरत
रक्षणावस्थितमुसमर्थ्यंकुरायकल्पतइतिभावः॥ य
दि विक्षेपोपसर्जनीभूतः समाधिर्नयोगः कस्तर्हिइत्य
तआह यस्त्वेकाग्रेचेतसिइति मूलमितिसमारोपित
मर्थंनिवर्त्तयति निद्रावृत्तिरपि स्वालंबने तमसिभूते=

भवत्येकाग्रेसत उक्तम्॥ ॥सदिति शोभनंनितांतावि
र्भूतसत्वंतमःसमुद्रेकस्त्वशोभनस्तस्यक्लेशहेतुत्वादि
ति द्योतनंहितत्वज्ञानमागमादनुमानाद्वा भवदपि
परोक्षरूपंतयानसाक्षात्कारवतीमविद्यामुच्छिनत्ति
हिचंद्रादिभ्रमोहादि ष्यनुच्छेदकत्वादतआह ॥
प्रेति प्रशब्दोहिप्रकर्षंद्योतयन्साक्षात्कारंसूचय
ति अविद्यामूलत्वादस्मितादीनांक्लेशानांविद्यायाश्चावि
द्योच्छेदरूपत्वात् विद्योदयेचाविद्यादिक्लेशसमुच्छे
दोविरोधित्वात् कारणविनाशाच्चेत्याह क्षिणोतिचे
ति अतएवकर्मरूपाणिबंधनानिश्लथयति कर्मचा
त्रापूर्वमभिमतं कार्यकारणोपचारात् श्लथयति स्व
कार्यादवसादयति वक्ष्यतिहिसतिमूलेतद्विपाकइति
किंचनिरोधमभिमुखंकरोत्यभिमुखीकरोति सचसंप्र
ज्ञातश्चतुःप्रकारइत्याह सचेति असंप्रज्ञातमाह स
र्ववृत्तीति रजस्तमोमयीकिलप्रमाणादिवृत्तिः सा
त्त्विकींवृत्तिमुपादाय संप्रज्ञातेनिरुद्धा असंप्रज्ञाते
तुसर्वासामेवनिरोधइत्यर्थः तदिहभूमिद्वयेस
मासायामधुमत्यादयोभूमयस्ताःसर्वास्तासुविः
दितःसार्वभौमइतिसिद्धम्॥द्वितीयंसूत्रमवतार
यति तस्यलक्षणेति तस्येति पूर्वसूत्रोपात्तंद्विवि
धंयोगंपरामृशति योगश्चित्तवृत्तिनिरोधः निरु
ध्यतेयस्मिन्प्रमाणादिवृत्तयोवस्थाविशेषेचित्तस्य

सोऽवस्थाविशेषोयोगः २॥ ॥ननुसंप्रज्ञातस्ययोगस्याव्यापकत्वादलक्षणमिदमनिरुद्धा हि तत्र सात्त्विकीचित्तवृत्तिरित्यतआह सर्वशब्दाग्रहणादिति यदिसर्वचित्तवृत्तिनिरोधइत्युच्येतभवेदव्यापकंसंप्रज्ञातस्यक्लेशकर्मविपाकाशयपरिपंथीचित्तवृत्तिनिरोधस्तु तमपिसंगृह्णाति तत्रापिराजसतामसचित्तवृत्तिनिरोधात्तस्यचतद्भावादित्यर्थः कुतःपुनरेकस्यचित्तस्यक्षिप्तादिभूमिसंबंधः किमर्थंचैवमवस्थस्यचित्तस्यवृत्तयोनिरोद्धव्याइत्याशंक्य प्रथमंतावदवस्थासंबंधे हेतुमुपन्यस्यति चित्तंहीति प्रख्याशीलत्वात्सत्वगुणं प्रवृत्तिशीलत्वाद्रजोगुणं स्थितिशीलत्वात्तमोगुणंप्रख्याग्रहणमुपलक्षणार्थं तेनान्येपिसात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यंते प्रवृत्त्याचपरितापशोकादयोराजसाः प्रवृत्तिविरोधी तमोवृत्तिधर्मः॥ स्थितिः स्थितिग्रहणाद्गौरवावरणादित्यादयउपलक्ष्यंते एतदुक्तंभवति एकमपिचित्तंत्रिगुण निर्मिततया गुणानांचवैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणामंसदनेकावस्थमुपपद्यतइति क्षिप्ताद्याएवचित्तस्य भूमीर्यथासंभवमवांतरावस्थाभेदवतीरादर्शयति प्रख्यारूपंहीति चित्तरूपेणपरिणतंसत्वं चित्तसत्वंतदेव प्रख्यारूपतया सत्वप्राधान्यं चित्तस्यदर्शितं तत्रचित्ते सत्वात्किंचिदूने रजस्तमसीयदामिथः

समेञ्च भवतः तदैश्वर्यञ्चविषयाश्च शब्दादयस्तान्येव
प्रियाणियस्यतत्तथोक्तं सत्वप्राधान्यात् खलु चित्तत
त्वप्रणिधित्सदपितत्वस्यतमसापिहितत्वादणिमा
दिकमेवतत्वमभिमन्यमानं तत्प्रणिधित्सतिप्रणि
धत्तेचक्षणं अथरजसाक्षिप्यमाणं तत्राप्यलब्ध-
स्थितितक्षियमात्रंभवति शब्दादिषुपुनरस्यस्वर
सवाहीप्रेमानिरूढएवतदनेनविक्षिप्तंचित्तमुक्तम्
क्षिप्तंचित्तंदर्शयनमूढमपिसूचयति तदेवतमसेति
यदाहितमोरजोविजित्य प्रस्तृतंतदा चित्तसत्वाव
कतमः समुत्सारणेऽशक्तत्वाद्रजसस्तमः स्थगितंचि
त्तमधर्माद्युपगच्छति अज्ञानंचविपर्य्ययज्ञानं अभा
वप्रत्ययालंबनंच निद्राज्ञानमुक्तंततश्च मूढावस्था
पिसूचितेति अनैश्वर्यं सर्वत्रेच्छाप्रतीघातः अधर्मा
दिव्याप्तं चित्तंभवतीत्यर्थः यदातुतदेव चित्तसत्वमा
विर्भूतसत्वमपगततमःपटलंसरजस्कभवति तदा
धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह प्रक्षीणेत्या
दि मोहस्तमस्तदेवचावरणं प्रकर्षेणक्षीणंयस्यतत्त
थोक्तं अतएव सर्वतोविशेषाविशेषलिंगमात्रालिं
गपुरुषेषुप्रद्योतमानं तथापिनधर्माद्यैश्वर्यायचक
ल्पते प्रवृत्तस्वभावादित्यतआह अनुविद्धं रजोमात्रया
रजसःप्रवर्त्तकत्वादस्तिधर्मादिरित्यर्थः तदनेनसं-
प्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषो

मेघमयोर्योगिनोश्चित्तसत्वसंगृहीतसंप्रसतिक्रान्तः
भावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह तदे
वचित्तं रजोलेशान्मलादपेतमतएव स्वरूपप्रतिष्टम
भ्यासवैराग्यपुटपाकप्रबंधविधूतरजस्तमोमलस्य
हि बुद्धिसत्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेंद्रि
यप्रत्याहृतस्यावसिताधिकारतयाच्चकार्यकारिणो
विवेकख्यातिः परंकार्यमवशिष्यत इत्याह सत्वपु
रुषान्यताख्यातिमात्रंचित्तं धर्ममेघध्यानोपगंभव
ति धर्ममेघश्चवक्ष्यते॥ अत्रैवयोगिजनप्रसिद्धिमा
ह तदिति सत्वपुरुषान्यताख्यातिमात्रंचित्तंधर्ममेघ
पर्यंतं प्रसंख्यानमित्याचक्षते ध्यायिनः चित्तसामा
नाधिकरण्यंच धर्मधर्मिणोरभेदविवक्षयाद्रष्टव्यं
विवेकख्यातेर्हानहेतुं चित्तिशक्तेश्चोपादानहेतुंनि
रोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसा
धुतांच विवेकख्यातेर्दर्शयति चितिशक्तिरित्यादि
सुखदुःखमोहात्मकत्वमशुद्धिः सुखमोहावपिविवे
किनंदुःखाकुरुतः अतोदुःखवद्धेयौ तथाचातिसुंद
रमप्यंतवद्दुनोति तेनतदपि हेयमेवविवेकिनःसे
यमशुद्धिरतश्च चितिशक्तौपुरुषेनस्त इत्युक्तं शुद्धा
चानंताचेति ननुसुखदुःखमोहात्मकशब्दादीनि यं
न्वेतयमानात्तदाकारापत्ता कथंविशुद्धातदाकारप
रिणहपरिवर्जनेच्च कुर्वती कथमनंतेत्यतउक्तं दर्शि

जात्यायुर्भोगबीजं तस्मान्निर्गतइतिनिर्बीजः अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति नतत्रेति उपसंहरति द्विविधःसयोगश्चित्तवृत्तिनिरोधइति संप्रश्नुत्तरसूत्रमवतारयंश्चोदयति तदवस्थेचेतः सीति किमाक्षेपेतत्तदाकारपरिणतबुद्धिबोधात्मा खल्वयंपुरुषःसदानुभूयते नतुबुद्धिबोधरहितोतो स्यपुरुषस्यबुद्धिबोधःस्वभावःसवितुरिवप्रकाशः नचसंस्कारशेषेचेतसिसोस्ति नचस्वभावमपहाय भावोवर्त्तितुमर्हतीति भावः स्यादेतत्संस्कारशेषाम पिबुद्धिंकस्मात्पुरुषोनबुध्यतेइत्यतआह विषया भावादिति नबुद्धिमात्रंपुरुषस्यविषयोपितुपुरुषा र्थवतीबुद्धिः विवेकख्यातिर्विषयभोगोवपुरुषार्थौ तौचनिरुद्धावस्थायां नस्तइतिसिद्धोविषयाभावइ त्यर्थः॥ सूत्रेणपरिहरति तदाद्रष्टुः स्वरूपेवस्थानंस्व रूपइत्यारोपितंशांतघोरमूढस्वरूपंनिवर्त्तयति पु रुषस्यहिचैतन्यं स्वरूपमनौपाधिकं नतुबुद्धिबोधः शांतादिरूपश्चौपाधिकोहिसः स्फटिकस्येवस्वभाव स्वच्छधवलस्यजपाकुसुमसन्निधानोपाधिररुणिमा नंचोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसंगादिति भावः स्वरूपस्यचाभेदेपिभेदं विकल्प्य॥ अधि करणभावउक्तइतिअयमेवार्थोभाष्यकृताद्योत्यते स्वरूपप्रतिष्ठेति तदानींनिरोधावस्थायां नव्युत्थानाव

स्यामितिभावः स्यादेतत् व्युत्थानावस्थायामप्रति
ष्ठिता स्वरूपे चितिशक्तिर्निरोधावस्थायां प्रतितिष्ठं
तीपरिणामिनी स्याद्व्युत्थाने चास्वरूपप्रतिष्ठाने व्यु=
त्थाननिरोधयोरविशेषदत्यत आह व्युत्थानचित्ते
त्विति नजातु कूटस्थनित्या चितिशक्तिः स्वरूपात्
च्यवते तेन यथा निरोधे तथैव व्युत्थानेपि न खलु भु
क्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेपि स्वरू
पोदयव्ययौ भवतः प्रतिपत्ता तु यथाभूतमप्यतथात्वे
नाभिमन्यते निरोधसमाधिमपेक्ष्य संप्रज्ञातोपि
व्युत्थानमेवेति स्त्रांतरमवतारयितुं पृच्छति कथंत
र्हीति यदि तथा भवंती न तथा केन तर्हि प्रकारेण प्र
काशत इत्यर्थः हेतुपदमध्याहृत्य सूत्रं पठति दर्शि
तविषयत्वात् वृत्तिसारूप्यमितरत्र इतरत्र व्युत्था
ने याश्चित्तवृत्तयः शांतघोरमूढास्ता एवाविशिष्ट
अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः सारूप्य
मित्यत्र सशब्द एकपर्यायः एतदुक्तं भवति॥ जपा
कुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभे
दग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शांतोस्मि दुःखि
तोस्मि मूढोस्मीत्यध्यवस्यति यथा मलिने दर्पण
तले प्रतिबिंबितं मुखं मलिनमारोप्य शोचत्यात्मा
नं मलिनोस्मीति यद्यपि पुरुषसमारोपोपि शब्दा
दिविज्ञानवत् बुद्धिवृत्तिर्यद्यपि च प्राकृतत्वेनाचि

द्रूपतयाऽनुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन्
पुरुषवृत्तिरिवानुभवइत्यवभासते तथाचायमत्र
विपर्य्ययोप्यात्माविपर्य्ययवानिवाभोक्तापिभोक्ते
वविवेकख्यातिरहितोपि तत्सहितइव विवेकख्या
त्यांप्रकाशते एतच्च चितेरप्रतिसंक्रमायास्तदाका
रापत्तौ स्वबुद्धिसंवेदनमित्यत्र सत्वपुरुषयोरत्यंत
संकीर्णयोः प्रत्ययाविशेषो भोगइत्यत्र चोपपादयि
ष्यते एतच्च मतांतरेपिसिद्धमित्याह तथाचेति पंच
शिखाचार्यस्यसूत्रं एकमेवदर्शनं ख्यातिरेवदर्श
नमिति ननुकथमेकंदर्शनं यावताबुद्धेः शब्दादि
विषयाविवेकविषयाचवृत्तिः प्राकृततयाजडत्वे
नानुभाव्यादर्शनं ततोन्यत्पुरुषस्यचैतन्यमनुभवो
दर्शनमित्यतआह ख्यातिरेवदर्शनमिति उदयव्य
यधर्मिणींवृत्तिं ख्यातिंलौकिकीमभिप्रेत्यैतदुक्तमे
कमेवेति चैतन्यंतुपुरुषस्यस्वभावो नख्यातिः तत्तु
नलोकप्रत्यक्षगोचरोपित्वागमानुमानगोचरइत्य
र्थः तदनेनव्युत्थानावस्थायांमूलकारणमविद्यां द
र्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावो
पिसूचितइति तमुपपादयन्नाह चित्तंस्वंभवतिपु
रुषस्यस्वामिनइतिसंबंधः॥ ननुचित्तजनितमुप
कारंभजमानोहिचेतनश्चित्तस्येशितानचास्यतज्ज
नितोपकारसंभवस्तदसंबंधादनुपकार्यत्वात्ततं

योगेतदुपकारभागित्वे परिणामप्रसंगादित्यतआ
ह अयसंस्कांतमणिकल्पं सन्निधिमात्रोपकारिदृ
श्यत्वेनेति नपुरुषसंयुक्तंचित्तमपितु तत्सन्निहितंस
न्निधिश्चपुरुषस्य नदेशतःकालतोवा तदसंयोगात्
किंतुयोग्यतालक्षणोस्तिच पुरुषस्यभोक्तृशक्तिश्चि
त्तस्यभोग्यशक्तिः तदुक्तंदृश्यत्वेनेति शब्दाद्याकार
परिणतस्यभोग्यत्वेनेत्यर्थः भोगश्चयद्यपिशब्दाद्या
कारावृत्तिश्चित्तस्य धर्मस्तथापिचित्तचैतन्ययोरभे
दसमारोपाद्वृत्तिसारूप्यात्पुरुषस्येत्युक्तं तस्माच्चि
त्ते नासंयोगेपितज्जनितोपकारभागितापुरुषस्या
परिणामिताचेतिसिद्धं ननु स्वस्वामिसंबंधोभोगहे
तुरविद्यानिमित्तोऽविद्यातु किंनिमित्ता नखलु निर्नि
मित्तंकार्यमुत्पद्यते यथाहुः स्वप्नादिवदविद्यायाःप्र
वृत्तिस्तस्य किंकृतेतिशंकामुपसंहारव्याजेनोद्धरति
तस्माच्चित्तवृत्तिशांतघोरमूढाकारचित्तवृत्त्युपभो
गे अनाद्यविद्यानिमित्तत्वादनादिःसंयोगोहेतुः अ
विद्यावासनयोश्च संतानोबीजांकुरसंतानवदना
दिरितिभावः स्यादेतत्पुरुषोहिशक्यउपदिश्यते न
च वृत्तिनिरोधोवृत्तीरविज्ञाय शक्योनचसहस्रेणा
पिपुरुषायुषैरलमिमाःकश्चित्परिगणयितुमसं-
ख्याताश्च कथंनिरोद्धव्या इत्याशंक्य तासामियत्ता
स्वरूपप्रतिपादनपरंसूत्रमवतारयति ताःपुनर्नि

रोद्धव्या बहुत्वे सति चित्तस्य वृत्तयः पंचतय्यः क्लिष्टा
क्लिष्टाः वृत्तिरूपोवयव्येकः तस्य प्रमाणादयोवयवाः
पंच ततस्तदवयवा पंचतयी पंचावयवा वृत्तिर्भव
तिताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदात् बह्व इति
बहुवचनमुपपन्नं एतदुक्तं भवति चैत्रो वा मैत्रो=
वाऽन्यो वा कश्चित्सर्वेषामेव तेषां वृत्तयः पंचतय्य ए
व नाधिका इति चित्तस्येति चैकवचनं जात्यभिप्रायं
चित्तानामिति तु द्रष्टव्यं तासामवांतरविशेषमनु=
ष्ठानोपयोगिनं दर्शयति क्लिष्टाक्लिष्टा इति अक्लिष्टा
उपादाय क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति
अस्य व्याख्यानं क्लेशहेतुका इति क्लेशा अस्मितादयो
हेतवः प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः यद्वा
पुरुषार्थे प्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेश=
कारित्वेन क्लेशायैव प्रवृत्तिः क्लेशः क्लिष्टं तदासामस्तो
ति क्लिष्टा इति यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिर
त एव कर्माशयप्रचये क्षेत्रीभूताः प्रमाणादिना खलु
यं प्रतिपन्नार्थमवसायतत्र सक्तो द्विष्टो वा कर्माशय=
माचिनोतीति भवंति॥ धर्मोधर्म्म॥ प्रसवभूमयो वृ
त्तयः क्लिष्टा इति अक्लिष्टा व्याचष्टे ख्यातिविषया इति
विधूतरजस्तमसो बुद्धिसत्वस्य प्रशांतवाहिनः प्रज्ञाप्र
सादः ख्यातिस्तया विषयिण्या तद्विषयं सत्वपुरुषवि
वेकमुपलक्षयति तेन सत्वपुरुषविवेकविषयाः यतो

अतएवगुणाधिकारविरोधिन्यः कार्यारंभणाद्दि गु
णानामधिकारोविवेकख्यातिपर्यवसानंच तद्विति
चरिताधिकाराणांगुणानामधिकारंविरुंधतीति
अतस्ताअक्लिष्टाःप्रमाण प्रभृतयोवृत्तयःस्यादेत
त् वीतरागजन्मादर्शनात् क्लिष्टवृत्तयएवसर्वेप्रा
णभृतोनचक्लिष्टवृत्तिप्रवाहे भवितुमर्हत्यक्लिष्टावृ
त्तयोनवामूषाभावेपिकार्यकारिताविरोधिमध्यपा
तित्वात्तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधस्तासांच
वैराग्येणपरेणेतिमनोरथमात्रमित्यतआह क्लिष्ट
प्रवाहेति आगमानुमानाचार्योपदेशपरिशीलनल
ब्धजन्मनी अभ्यासवैराग्येक्लिष्टछिद्रमंतरात्तत्रपति
ताःस्वयमक्लिष्टाएवयद्यपिक्लिष्टप्रवाहपतिताःनख
लुशालग्रामेकिरातशतसंकीर्णेप्रतिवसन्नपिब्राह्म
णःकिरातोभवति अक्लिष्टछिद्रेष्वितिनिदर्शनंक्लिष्टां
तरवर्त्तितयाचक्लिष्टाभिरनभिभूताअक्लिष्टाः स्वसं
स्कारपरिपाकक्रमेणक्लिष्टाएवतावदभिभवंतीत्या
ह तथाजातीयकाइति अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाःसं
स्काराइत्यर्थः तदिदंवृत्तिसंस्कारचक्रमनिशमाव
र्त्तते चानिरोधसमाधेः तदेवंभूतंचित्तंनिरोधाव
स्थंसंस्कारशेषंभूत्वाऽऽत्मकल्पेनावतिष्ठत इत्यापा
तितःप्रलयंवागच्छतीतिपरमार्थेन पिंडीकृत्यसूत्रा
र्थमाह तादृति पंचधेत्यर्थकथनमात्रंनतुशब्दवृ

त्ति व्याख्यातं॥ तपश्चः प्रकारे स्मरणात् ताः स्वसंज्ञा
भिरुद्दिशति प्रमाणविपर्ययविकल्पनिद्रास्मृतयः
निर्द्देशेयथावचनंविग्रहश्चार्थेद्वंद्वःसमासइतरेतर
योगः यथा नित्याशुचिदुःखानात्मसुनित्यशुचिसु=
खात्मख्यातिरविद्येत्युक्तेपिनदिग्मोहालातचक्रा
दिविभ्रमाव्युदस्यंते एवमिहापिप्रमाणाद्यभिधाने
पिवृत्त्यंतरसद्भावशंकानव्युदस्येतेति तन्निरासाय
वक्तव्यं पंचतय्यइति एतावत्यएववृत्तयोनापराः
संतीति दर्शितंभवति-तत्र प्रमाणवृत्तिं विभजन्सामा
न्यलक्षणमाह प्रत्यक्षानुमानागमाः प्रमाणानि अन
धिगततत्वबोधः पौरुषेयोव्यवहारहेतुः प्रमातत्क
रणं प्रमाणं विभागवचनंच न्यूनाधिकसंख्या व्यव
च्छेदार्थं तत्र सकलप्रमाणमूलत्वात् प्रथमतः प्रत्यक्षं
लक्षयति इंद्रियेति अर्थस्येतिसमारोपितत्वं निषेध
ति तद्विषयेति बाह्यगोचरतयाज्ञानाकारगोचरत्वं
निवारयति चित्तवर्त्तिनोज्ञानाकारस्यबाह्यज्ञेयसंबं
धंदर्शयति बाह्यवस्तूपरागादिति व्यवहितस्यतदु
परागेहेतुमाह इंद्रियप्रणालिकयेति सामान्यमात्र
मर्थइत्येके विशेषाएवेत्यन्ये सामान्यविशेषतद्वंत
इत्यपरेवादिनः प्रतिपन्नास्तन्निरासायाह सामान्य
विशेषात्मनइति नतद्वंता किंतुतादात्म्यमर्थस्यएत=
च्चैकांतानभ्युपगमइत्यत्र प्रतिपादयिष्यते अनुमा

नागमविषयात्प्रत्यक्षविषयव्यवच्छिनत्ति विशेषा
वधारण प्रधानेति यद्यपि सामान्यमपिप्रत्य
त्यक्षेप्रतिभासते तथापिविशेषंप्रत्युपसर्जनीभूत
मित्यर्थः एतच्चसाक्षात्कारोपलक्षणपरं तथाच वि
वेकख्यातिरपिलक्षिताभवति फलविप्रतिपत्तिंनि
राकरोति फलंपौरुषेयश्चित्तवृत्तिबोधइति ननु
पुरुषवर्त्तीबोधः कथंचित्तगतायावृत्तेःफलंनहि
खदिरगोचरव्यापारेणपरशुनापलाशेछिदाक्रियत
तेइत्यतआह अविशिष्टइति नहिपुरुषगतोबोधो
जन्यतेऽपितुचैतन्यमेव बुद्धिदर्पणप्रतिबिंबितं
बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमानंफ
लंतच्च तथाभूतंबुद्धेरविशिष्टंबुध्यात्मकंवृत्तिश्चबु
ध्यात्मिकेति सामान्याधिकरण्याद्युक्तः प्रमाणफल
भावइत्यर्थः एतच्चोपपादयिष्याम इत्याह प्रतिसंवे
दीति प्रत्यक्षानंतरंप्रवृत्त्यादिलिंगकश्रोतृबुद्ध्यनुमा
नप्रभवसंबंधदर्शनसमुत्थतयागमस्यानुमानजत्वा
दनुमितस्यचागमेनान्वाख्यानादागमात् प्रागनुमा
नंलक्षयति अनुमेयस्येति जिज्ञासितधर्मविशिष्टो
धर्म्यनुमेयस्तस्य तुल्यजातीयाःसाध्यधर्मसामान्ये
नसमानार्थाःसपक्षास्तेष्वनुवृत्तइत्यनेनविरुद्ध
त्वमसाधारणत्वंच साधनधर्मस्यनिराकरोति भि
न्नजातीयाश्चसपक्षास्तेचसपक्षादन्येतद्विरुद्धा

स्तद्भाववंतश्च तेभ्यो व्यावृत्तस्तदनेनसाधारणा
नैकांतिकत्वमपाकरोति संबध्यतद्वतिसंबंधो लिं
गमनेन पक्षधर्मतांदर्शयन्नसिद्धतांनिवारयति त
द्विषयात्तन्निबंधनाषिञ् निबंधनद्रूपस्माद्विषयप
द्युत्पत्तेः सामान्यावधारणेति प्रत्यक्षविषया द्व्य
वछिनत्ति संबंधसंवेदनाधीनजन्मानुमानं विशेषे
षुसंबंधग्रहणाभावेन सामान्यमेवसुकरसंबंधग्र
हणंगोचरयतीति उदाहरणमाह यथेति चोहेत्व
र्थो विंध्योऽगतिर्यतस्तस्मात्तस्याप्राप्तिरतोगतिनिवृ
त्तोप्राप्तेर्निवृत्तिर्देशांतरप्राप्तेर्गतिमत्त्वंद्रतारकंचैत्र
वदितिसिद्धं आगमस्यवृत्तेर्लक्षणमाह आप्तेनेति त
त्वदर्शनकारुण्यकरणपाटवाभिसंबंधआप्तिस्तया
वर्त्ततद्वत्याप्तस्तेन दृष्टोनुमितोवार्थः श्रुतस्य पृथगनु
पादानं तस्यदृष्टानुमितमूलत्वेन ताभ्यामेवचरिता
र्थत्वात् आप्तचित्तवर्त्तिज्ञानसदृशस्य ज्ञानस्यश्रोतृ
चित्ते समुत्पादः स्वबोधसंक्रांतिस्तस्यैअर्थउपदिश्य
ते श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते
शेषंसुगमम्रूपस्यागमस्याश्रद्धेयार्थोवक्तायथायान्येव
दशदाडिमानितानिषडपूपाभविष्यंतीति नदृष्टानु
मितार्थोयथाचैत्यंवंदेत स्वर्गकामइति सआगमः प्र
वर्त्ते नहितेपिदृष्टानुमितार्थायथाहुः यःकश्चित्कस्य
चिद्धर्मोमनुनापरिकीर्त्तितः ससर्वोभिहितोवेदेसर्वज्ञा

ति अस्यकुत्सितत्वंहानायदर्शयति सेयंपंचेति॥अ
विद्यासामान्यमविद्यास्मितादिषुपंचसुपर्वस्वित्य
र्थः अव्यक्तमहदहंकारपंचतन्मात्रेष्वष्टस्वनात्मस्वा
त्मबुद्धिरविद्यातमःएवंयोगिनामष्टस्वणिमादिकेष्वै
श्वर्येष्वश्रेयःसुश्रेयोबुद्धिरष्टविधोमोहः पूर्वस्माज्ज
घन्यः सत्वास्मितोच्यते तथायोगेनाष्टविधमैश्वर्यमु
पादायसिद्धोभूत्वादृष्टानुश्रविकान् शब्दादीन्दश
विषयान्भोक्ष्यइत्येवमात्मिकाप्रतिपत्ति र्महामो
होरागःएवमेतेनैवाभिसंधिनाप्रवर्त्तमानस्यकेन
चित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबंधन
स्यदृष्टानुश्रविकविषयोपभोगस्यासिद्धेःप्रतिबंधक
विषयःक्रोधः सतामिस्राख्योद्वेषएवमणिमादिगु
णसंपत्तौदृष्टानुश्रविकविषयप्रत्युपस्थानेचक=
ल्पांतेसर्वमेतन्नंक्ष्यतीतियस्त्रासःसोभिनिवेशोंऽध
तामिस्रःतदुक्तं भेदस्तमसोष्टविधोमोहस्यचदश=
विधोमहामोहः तमिस्रोष्टादशधा तथाभवत्यंधता
मिस्रइति शब्द ज्ञानानुपाती वस्तुशून्यो विक
ल्पः॥ ननु शब्द ज्ञानानुपाती चे दागम प्रमा
णांतर्गतो विकल्पः प्रसज्येत निर्वस्तुकत्वे वा
विपर्य्ययः स्यादित्यत आह स नेति न प्र=
नप्रमाणविपर्ययांतर्गतःकस्माद्यतोवस्तुशून्यत्व
त्वेपीति प्रमाणांतर्गतिंनिषेधति शब्दज्ञानमाहा=

स्यनिबंधनइतिविपर्ययांतर्गतं एतदुक्तंभवति
क्वचिदभेदेभेदमारोपयति क्वचित्पुनर्भिन्नाना
मभेदं ततोभेदस्याभेदस्यचवस्तुतोभावात्तदाभा
सोविकल्पोनप्रमाणं नापिविपर्ययोव्यवहाराधि
संवाददिति शास्त्रप्रसिद्धमुदाहरणमाहतद्यथे
ति किंविशेष्यंकेनव्यपदिश्यते विशेष्यतेनाभेदे
विशेष्य विशेषणभावोनहिगवागोर्विशेष्यतेकिं
तु भिन्नेन चैत्रेणतदिदमाहभवतिचव्यपदेशव्
त्तिः व्यपदेश्यव्यपदेशकयोर्भावोव्यपदेशः विशे
षणविशेष्यभावइतियावत् तस्मिन्वृत्तिर्लोकस्य
यथाचैत्रस्यगौरिति शास्त्रीयमेवोदाहरणांतरंस
मुच्चिनोति तथेति प्रतिषिद्धोवस्तुनःपृथिव्यादेर्ध
र्मःपरिस्पंदोयस्यसतथोक्तःकोसौनिष्क्रियःपुरुषः
नखलुसांख्यीयेराद्धांतेभावोनामकश्चिदस्ति व
स्तुधर्मोयेनपुरुषोविशेष्यतेत्यर्थः क्वचित्पाठः प्र
तिषिद्धावस्तुधर्माइतितस्यार्थः प्रतिषेधव्याप्ताः
प्रतिषिद्धानवस्तुधर्माणां तद्व्याप्यताभावाभावयो
रसंबंधादर्थवत्तथाप्रतीतिरिति लौकिकमुदाहर
णमाह तिष्ठति बाणइति यथाहिपचतिभिन्नतीत
त्रपूर्वापरीभूतःकर्मकलापएकफलावच्छिन्नःप्रती
यतेइत्येवंतिष्ठतीत्यत्रापि पूर्वापरीभावमेवाह स्या
स्यति स्थितइति ननुभवतुपाकवत् पूर्वापरीभूतया

वस्यानङ्क्रियया वाणाद्भिन्नयावाणस्यव्यपदेश इत्य
तआह गतिनिवृत्तौ धात्वर्थमात्रं गम्यते गतिनिवृ
त्तिरेवतावत्कल्पितातस्याअपिभावरूपत्वं तत्रापि
पूर्वापरीभाव इत्यहो कल्पनापरंपरेत्यर्थः॥अभावः
कल्पितोभावइवचानुगतइवचसर्वेपुरुषेषु गम्यते
नपुरुषव्यतिरिक्तोधर्मःकश्चिदित्युदाहरणांतरमा
ह तथानुत्पत्तिधर्मेति प्रमाणविपर्ययाभ्यामन्यान:
विकल्पवृत्तिरितिवादिनो बहवःप्रतिपेदिरेतत्प्रति
बोधनायोदाहरणप्रपंच इति मंतव्यं अभावप्रत्यया
लंबनावृत्तिर्निद्राअधिकृतंहिवृत्तिपदमनुवादकं प्र
माणविपर्ययविकल्पस्मृतीनांवृत्तित्वंप्रतिपरीक्ष:
काणामविप्रतिपत्तेरतस्तदनूद्यतेविशेषविधानायनि
द्रायास्तुवृत्तित्वेपरीक्षकाणामस्तिविप्रतिपत्तिरिति
वृत्तित्वंविधेयंनचप्रकृतमनुवादकंविधानाय क
ल्पतइतिपुनर्वृत्तिग्रहणं जाग्रत्स्वप्नवृत्तीनामभा:
वस्तस्य प्रत्ययःकारणं बुद्धिसत्वाच्छादकतमस्तदे
वालंबनंविषयोयस्याःसातथोक्तावृत्तिर्निद्रा बुद्धि
सत्वेहित्रिगुणेयदा सत्वरजसीअभिभूय समस्तक
रणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारप
रिणामाभावादुद्भूतमोमयींबुद्धिमवबुध्यमानः
पुरुषःसुप्तोंतःसंज्ञ इत्युच्यते कस्मात्पुनर्निरुद्धके
वल्ययोरिववस्यभावएवननिद्रेत्यतआह सावस्

स्मात्संप्रमोषपदव्युत्पत्तेः एतदुक्तं भवति सर्वे प्रमा
णादयोनधिगतमर्थं सामान्यतः प्रकारतोवाधिगमयं
ति स्मृतिः पुनर्नपूर्वानुभवमर्यादामतिक्रामति तद्वि
षयात्तदूनविषयावानतु तदधिकविषयासोयंवृत्त्यं
तराद्विशेषः स्मृतेरिति विमृशति किंप्रत्ययस्येति ग्रा
ह्य प्रवणत्वात् अनुभवस्य स्वानुभवाभवात्तज्जः सस्सं
स्कारोग्राह्यमेवस्मारयतीति प्रतिभाति अनुभवमा
त्रजनितत्वाच्चानुभवमेवेति विमृश्योपपत्तितउभ
यस्मरणमवधारयति ग्राह्यप्रवणतया ग्राह्योपरक्तः
परमार्थतस्तु ग्राह्यग्रहणे एव उभयं तयोप्रकारस्वरू
पं निर्भासयति प्रकाशयति स्वव्यंजकं कारणमंजन
माकारोयस्य स तथोक्तः स्वकारणाकार इत्यर्थः व्यं
जकमुद्बोधकं तेनांजनं फलाभिमुखीकरणं यस्ये
ति वेत्यर्थः ननु यदि कारणविचारेण बुद्धिस्मरणयोः
सारूप्यं कस्तर्हि भेद इत्यत आह तत्रग्रहणेति ग्र
हणमुपादानं नच गृहीतस्योपादानं संभवतितद
नेनानधिगतबोधनं बुद्धिरित्युक्तं ग्रहणाकारोग्रह
णरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता विकल्पितश्चा
यमभेदेपि गुणप्रधानभावइति ग्राह्याकारः पूर्वः प्र
थमोयस्याः सा तथोक्ता इदमेवच ग्राह्याकारस्य ग्रा
ह्यस्य पूर्वत्वं यद्वृत्त्यंतरविषयीकृतत्वमर्थस्य तदनेन
वृत्त्यंतरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति सो

यमसंप्रमोषइति ननुअस्तिस्मृतेरपि संप्रमोषःदर्शय
तिहि पित्रादेरतीतस्य देशकालांतरानुभूतस्यानु
भूतत्वरदेशकालांतर संबंधस्वप्रइत्यतआह साच द्व
यीतिभावितःकल्पितः स्मर्तव्योययासातथोक्ता अभा
वितोऽकल्पितःपारमार्थिकइतियावत् नेयंस्मृतिरपि
तु विपर्ययस्तल्लक्षणोपपन्नत्वात्स्मृत्याभासतयातु
स्मृतिरुक्ताप्रमाणाभासमिवप्रमाणमितिभावः क
स्मात्पुनरंतेस्मृतेरुपन्यास इत्यतआह सर्वाःस्मृतय
इति अनुभवःप्राप्तिः प्राप्तिपूर्वावृत्तिः स्मृतिस्ततः स्मृ
तीनामुपजननइत्यर्थः ननुयेपुरुषं क्लिश्यंतितेनिरोद्धु=
व्याःप्रख्यावताक्लेशाश्चतथानचवृत्तयःतत्किमर्थमा
सांनिरोधइत्यतआह सर्वाश्चैताइतिसुगमम् निरो
धोपायंपृच्छति अथेति सूत्रेणोत्तरमाह अभ्यासवै
राग्याभ्यांतन्निरोधः अभ्यासवैराग्ययोर्निरोधेजनयि
तव्येअवांतरव्यापारभेदेन समुच्चयोनतुविकल्प
इत्याह चित्तनदीति प्राग्भारः प्रबंधः निम्नतागंभीर
ताऽगाधतेतियावत् तत्राभ्यासस्यस्वरूपप्रयोज
नाभ्यांलक्षणमाह तत्र स्थितौयत्नोभ्यासः तद्व्याच
ष्टे चित्तस्यावृत्तिकस्य राजसतामसवृत्तिरहितस्य
प्रशांतवाहिता विमलतासात्त्विकवृत्तिवाहितैका
ग्रता स्थितिःतदर्थइति स्थिताविति निमित्तसप्तमी
यथाख्यातांयथाचर्मणि द्वीपिनहंतीति प्रयत्नमेवप

र्वीर्याभ्यां विशदयति वीर्यमुत्साह इति तस्यैकाग्र्ये नितामाह तत्संपिपादयिषया तदिति स्थिति परा मृशति प्रयत्नस्य विषयमाह तत्साधनेति स्थिति साधनान्यंतरंग बहिरंगाणि यमनियमादीनि सा धनगोचरः कर्तृव्यापारो न फलगोचर इति ननु व्युत्थानसंस्कारेणानादि परिपंथिना प्रतिबद्धोभ्या सः कथं स्थित्यै कल्प्यत इत्यत आह स तु दीर्घकालनै रंतर्यसत्कारासेवितो दृढभूमिः सोयमभ्यासो विशेष णत्रयसंपन्नः सन् दृढावस्थो न सहसा व्युत्थानसंस्का रैरभिभूत स्थितिरूप विषयो भवति यदि पुनरेवंभूत मप्यभ्यासं कृत्वोपरमेत ततः कालपरिवासेनाभिभ वेत् तस्मान्नोपरंतव्यमिति भावः वैराग्यमाह दृष्टा नुश्रविक विषयवितृष्णस्य वशीकारसंज्ञा वैराग्यं चेतनाचेतनेषु दृष्टविषयेषु वितृष्णतामाह स्त्रिय इति ऐश्वर्यमाधिपत्यं अनुश्रवो वेदस्ततोधिगता आनुश्र विकाः स्वर्गादयस्तत्रापि वैतृष्ण्यमाह स्वर्गेति देह रहिता विदेहाः करणेषु लीनाः तेषां भावो वैदेह्यं अन्ये तु प्रकृतिमेवात्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीनास्तेषां भावः प्रकृतिल यत्वं तत्प्राप्तिविषये वितृष्णस्य आनुश्रविक विषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण उच्यते ननु यदि वैतृष्ण्यमात्रं वैराग्यं हंत विषयाप्राप्तावपि तद्

स्तीतिवैराग्यंस्यादित्यतआह दिव्यादिव्येति नन्वे
तृष्णयमात्रंवैराग्यं अपितुदिव्यादिव्यविषयसंप्र
योगेपिचित्तस्यअनाभोगात्मिकातामेवस्पष्टयति
हेयोपादेयशून्यासंगद्वेषरहितायोपेक्षाबुद्धिर्वशी
कारसंज्ञाकुतः पुनरियमित्यतआह प्रसंख्यानबल
लादिति तापत्रयपरीततविषयाणांदोषस्तत्परिभाव
नयातत्साक्षात्कारःप्रसंख्यानंतद्बलादित्यर्थःयतमानसं
ज्ञाव्यतिरेकसंज्ञाएकेंद्रियसंज्ञावशीकारसंज्ञाचेति
चतस्रः संज्ञा इत्यागमिनः रागादयःखलुकषायाश्चि
त्तवर्त्तिनस्तैरिंद्रियाणियथास्वंविषयेषुप्रवर्त्तंतेतन्मा
प्रवर्त्तिषतेंद्रियाणि तत्तद्विषयेष्विति तत्परिपाचना
यारंभःप्रयत्नःसायतमानसंज्ञा तदारंभेसतिकेचित्क
षायाःपक्वाःपच्यंते पक्ष्यंतेचकेचित्तत्र पक्ष्यमाणेभ्यः
पक्वानांव्यतिरेकेणावधारणंव्यतिरेकसंज्ञा इंद्रिय
प्रवर्त्तनासमर्थतयापक्वानामौत्सुक्यमात्रेणमनः
सि व्यवस्थानमेकेंद्रियसंज्ञाऔत्सुक्यमात्रस्यापि
निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षा
बुद्धिःसंज्ञा त्रयात् परावशीकारसंज्ञा एतयैवचपू
र्वासांचरितार्थत्वान्न ताःपृथगुक्ता इतिसर्वमवदा
तं अपरंवैराग्यमुक्त्वापरमाह तत्परंपुरुषख्यातेर्गु
णवैतृष्ण्यं अपरवैराग्यस्यपरवैराग्यंप्रतिकारणत्वं
तत्रचद्वारमादर्शयति दृष्टानुश्रविकविषयदोषद

र्शीविरक्तइति अनेनापरंवैराग्यंदर्शितं पुरुषदर्शनाभ्यासादागमानुमानाचार्योपदेशसमधिगतस्यपुरुषस्यदर्शनंतस्याभ्यासःपौनःपुन्येननिषेवणंतस्मात्तस्यदर्शनस्यशुद्धौरजस्तमःपरिहाराय्या सत्वैकतानताततयायेगुणपुरुषयोःप्रकर्षेणविवेकःपुरुषःशुद्धोनंतःतद्विपरीतागुणाइतितेनाप्यायितावुद्धिर्यस्ययोगिनःसतथोक्तस्तद्दनेनधर्ममेघाख्यःसमाधिरुक्तःसतथाभूतोयोगीगुणेभ्योव्यक्ताव्यक्तधर्मकेभ्यःसर्वथाविरक्तःसत्वपुरुषान्यताख्यातावपिगुणात्मिकायांयावद्विरक्तइति तत्तस्मात्द्वयंवैराग्यं पूर्वंहि वैराग्यंसत्वसमुद्रेकविधूततमसि रजःकणकलंकसंपृक्तेचित्तसत्वेतच्च तौष्टिकानामपिसमानंतेहि तेनैवप्रकृतिलयाबभूवुः तथोक्तंवैराग्यात्प्रकृतिलयइति तत्रतयोर्द्वयोर्मध्येयदुत्तरंतत्ज्ञानप्रसादमात्रं मात्रग्रहणेन निर्विषयतांसूचयति तदेवंहि तादृशंचित्तसत्वंरजोलेशमलेनापिअपरामृष्टमस्याश्रयोतएवज्ञानप्रसादइत्युच्यते चित्तसत्वंहि प्रसादस्वभावमपिरजस्तमःसंपर्कात्मलिनताम नुभवति वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलंत्वतिप्रसन्नंज्ञानप्रसादमात्रपरिशेषंभवति तस्यगुणानुपादेयत्वायदर्शयतियस्योदयेसतियोगीप्रत्युदितख्यातिःख्यातिविशेषेसतिवर्तमा

नख्यातिमानिस्यथेः प्रापणीयं कैवल्यं प्राप्तं यथाव
क्ष्यतिजीवन्नेव विद्वान्मुक्तोभवति संस्कारमात्रस्यछि
न्नमूलस्यसिद्धत्वादितिभावः कुतः प्राप्तंयतः क्षीणाः क्षे
तव्याः क्लेशाः अविद्यादयः सवासनाः नन्वस्तिधर्माध
र्मसमूहो भवस्य जन्ममरणप्रबंधस्य संक्रमः प्राणि
नांतत्कुतः कैवल्यमित्यतआह छिन्नइति श्लिष्टा
निनिःसंधीनिपर्वाणियस्यसतथोक्तः धर्माधर्मसमू
हस्यसमूहिनः पर्वाणि तानिश्लिष्टानि नहिजातुजंतु
र्मरणजन्मप्रबंधेनविमुज्यतेसोयं भवसंक्रमः क्लेश
क्षये छिन्नः यथावक्ष्यति क्लेशमूलः कर्माशयः सति
मूलेतद्विपाकइति ननुप्रसंख्यानपरिपाकंधर्ममेघं
च निरोधं अंतरा किंतदस्ति यज्ज्ञानप्रसादमात्रमि
त्यतआह ज्ञानस्यैवेति धर्ममेघभेदएवपरं वैराग्यं
नान्यत् यथावक्ष्यति प्रसंख्यानेप्यकुसीदस्य सर्वथा
विवेकख्यातेर्धर्ममेघः समाधिः तदा सर्वावरणमला
पेतस्यज्ञानस्यानंत्यात् ज्ञेयमल्पमितिच तस्मादेत
स्यहिनांतरीयकत्वं विनाभावि कैवल्यमिति उपाय
मभिधाय सप्रकारोपेयकथनाय एष्वति अथोपाय
द्वयेनेति वितर्कविचारानंदास्मितारूपानुगमात्सं
प्रज्ञातः संप्रज्ञातपूर्वकत्वादसंप्रज्ञातस्यप्रथमंसंप्र
ज्ञातोपवर्णनं सप्रज्ञातःसामान्यं वितर्कविचारान
दास्मितानांरूपैः स्वरूपैरनुगमात् प्रतिपत्तव्यं वित

क्तैनिवृणोति चित्तस्येतिस्वरूपसाक्षात्कारवती प्रज्ञा
आभोगः सचस्थूलविषयत्वात्स्थूलः यथाहि प्राथमि
कोधानुष्कः स्थूलमेवलक्ष्यंविध्यत्यथसूक्ष्मं एवंप्राथ
मिकोयोगीस्थूलमेवपांचभौतिकंचतुर्भुजादिध्येयं
साक्षात्करोत्यथसूक्ष्ममिति एवंचित्तस्यालंबनेसूक्ष्मं
आभोगःस्थूलकारणभूतसूक्ष्मपंचतन्मात्रलिंगालिं
गविषयोविचारः तदेवंग्राह्यविषयंदर्शयित्वाग्रहण
विषयंदर्शयति आनंदइति इंद्रियेस्थूलआलंबनेचि
त्तस्याभोगः आह्लादआनंदःप्रकाशशीलतयाखलुसत्व
प्रधानादहंकारादिंद्रियाण्युत्पन्नानि सत्वंसुखमिति
तान्यपि सुखानीतितस्मिन्नाभोगआह्लादइति ग्रहीतृ
विषयसंप्रज्ञातमाह एकात्मिकासंविदिति अस्मिता
प्रभवानींद्रियाणि तेनैषामस्मितासूक्ष्मंरूपं सान्वात्म
नाग्रहीत्रासहबुद्धिरेकात्मिकासंविदिति तस्यांचग्र
हीतुरंतर्भावाद्भवतिग्रहीतृविषयःसंप्रज्ञातइतिचतु
र्णामपरमप्यवांतरविशेषमाह तत्रप्रथमइति कार्यं
कारणानुप्रविष्टंनकारणं कार्येणतदयंस्थूलआभो
गः स्थूलसूक्ष्मेंद्रियास्मिताकारणचतुष्टयानुगतोभव
ति उत्तरेतुत्रिद्व्येककारणकास्त्रिद्व्येकरूपाभवंतिअसं
प्रज्ञातादिनत्ति सर्वएतइति क्रमप्राप्तमसंप्रज्ञातम
वतारयितुंप्रष्टति अथेति विरामप्रत्ययाभ्यासपूर्वः सं
स्कारशेषोन्यः पूर्वपदेनोपायकथनमुत्तराभ्यांचस्वरू

ग्यसंपन्नानां सरवल्वयभवःप्रत्ययः कारणंयस्यनिरो धसमाधेःसभवप्रत्ययः तत्र तयोर्मध्यउपायप्रत्ययो योगिनांमोक्ष्यमाणानांभवतिविशेषविधानेनशेषस्य मुमुक्षुसंबंधंनिषेधति केषांतर्हिभवप्रत्ययइत्यत्रसू त्रेणोत्तरमाह भवप्रत्ययोविदेहप्रकृतिलयानां विः देहाश्चप्रकृतिलयाश्चतेषामित्यर्थः तद्व्याचष्टेविदे हानां देवानांभवप्रत्ययोभूतेंद्रियाणामन्यतमदात्म त्वेनप्रतिपन्नास्तदुपासनया तद्वासना वासितांतःक रणाः पिंडपातानंतरमिंद्रियेषुतत्त्वेषुवा लीनाःसंस्कार मात्रावशेषमनसः षाट्कौशिकशरीररहिताविदेहाः ते हिसंस्कारमात्रोपयोगेनचित्तेनकैवल्यपदमिवानु भवंतःप्राप्नुवंतः विदेहस्यावृत्तिकत्वंचकैवल्येनसा रूप्यं साधिकारसंस्कारशेषताच्चवैरूप्यं संस्कारमा त्रोपभोगेनेतिक्वचित्पाठः तस्यार्थः संस्कारमात्रमेवोः पभोगोयस्यनतुचित्तवृत्तिरित्यर्थः प्राप्ता.वधयःस्वसं स्कारविपाकंतथाजातीयकमतिवाह्यंसतिक्रामं तिपुनरपिसंसारेविशंति तथाचवायुप्रोक्तं दशमन्वं तराणीहतिष्ठंतींद्रियचिंतकाः भौतिकास्तुशतंपूर्ण मिति तथाप्रकृतिलयाश्च अव्यक्तमहदहंकारपंच तन्मात्रेष्वन्यतमदात्मत्वेनप्रतिपन्नास्तदुपासनया तद्वासनावासितांतःकरणाः पिंडपातानंतरमव्यक्ता दीनामन्यतमस्मिन्लीनाः साधिकारेऽचरितार्थेप्रधं

चरितार्थंचेतःस्याद्यदिविवेकख्यातिमपिजनयेदज्ञ=
नितसत्वपुरुषान्यताख्यातिस्तुचेतसोऽचरितार्थस्या
स्तिसाधिकारतेतिसाधिकारे चेतसिप्रकृतौलीने
कैवल्यपदमिवानुभवंति यावन्नपुनरावर्त्ततेअधि
कारवशाच्चित्तमिति प्रकृतिसाम्यमुपगतमप्यव=
धिंप्राप्यपुनरपिप्रादुर्भवतिततोविविच्यतेयथा
वर्षातिपातेमृद्भावमुपगतोमंडूकदेहः पुनरंभोद
वारिधारावसेकान्मंडूकदेहभावमनुभवतीति त
थाचवायुप्रोक्तंसहस्रंत्वभिमानिकाःबौद्धादशस
हस्राणितिष्ठंतिविगतज्वराः पूर्णंशतसहस्रंतुतिष्ठं
त्यव्यक्तचिंतकाः पुरुषंनिर्गुणंप्राप्यकालसंख्यान
विद्यतेइति तदस्यपुनर्भवप्राप्तिहेतुतयाहेयत्वंसि
द्धंयोगिनांतुसमाधेरुपायक्रममाह श्रद्धावीर्यस्मृ
तिसमाधिप्रज्ञापूर्वकइतरेषांनन्विंद्रियादिचिंत
काअपिश्रद्धावंतएवेत्यतआह श्रद्धाचेतसःसंप्रसा
दःसचागमानुमानाचार्योपदेशसम धिगततत्वविष
योभवतिहिचेतसःसंप्रसादोऽभिरुचिरतोवाश्रद्धा
नेंद्रियादिष्वात्माभिमानिनामभिरुचिरसंप्रसादोहि
सःव्यामोहमूलत्वादित्यर्थः कुतोसावेवश्रद्धेत्यतआ
ह साहिजननीवकल्याणीयोगिनंपातिविमार्गपात
जन्मनोर्यातुसोयमिच्छाविशेषद्रुष्यमाणविपर्ययप्रय
त्नप्रसूत इत्याह तस्यहि श्रद्दधानस्यतस्यविवरणं=

सूत्रांतरंपातयितुंविमृशतिकिमस्मादेवेति नवाश
ब्दःसंशयनिवर्तकः ईश्वरप्रणिधानाद्वा व्याचष्टे प्र
णिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वा
आवर्जितोभिमुखीकृतस्तमनुगृह्णाति अभिध्यान
मनागतेर्थे इच्छाइदमस्याभिमतमस्त्वितितन्मात्रे
णनव्यापारांतरेणशेषंसुगमम्॥ननुचेतनाचेतनाभ्या
मेवमूढंनान्येनविश्वंईश्वरश्चेदचेतनस्तर्हिप्रधानं
प्रधानविकाराणामपि प्रधानमध्यपातात्तथाच नत
स्यावर्जनमचेतनत्वादथचेतनस्तथापिचितिशक्ते
रौदासीन्यादसंसारितयाचास्मितादिविरहात्कुतः
आवर्जनंकुतश्चाभिध्यानमित्याशयवानाह अथप्र
धानेति अत्रसूत्रेणोत्तरमाह क्लेशकर्मविपाकाशयैर
परामृष्टःपुरुषविशेषईश्वरः अविद्यादयःक्लेशाः क्लि
श्नंतिखल्वमीपुरुषं सांसारिकं विविधदुःखप्रहारे
णेति कुशलाकुशलानीति धर्माधर्मास्तेषांचकर्मज
त्वादुपचारात्कर्मत्वं विपाकोजात्यायुर्भोगाः विपाका
नुगुणावासनास्ताश्चित्तभूमौआशेरतइतिआशयाः
नहिकरभजातिनिर्वर्तकं कर्मप्राग्भवीयकरभभो
गभाविताभावनां नयावदभिव्यनक्तितावत्करभोचि
तायभोगायकल्पते तस्माद्भवति करभजात्यनुभवज
न्माभावनाकरभविपाकानुगुणेति नन्वमीक्लेशादयो
बुद्धिधर्मानकथंचिदपि पुरुषंपरामृशंति तस्मात्पुरु

षग्रहणादेवतदपरामर्शसिद्धेः कृतंक्लेशकर्मेत्यादिने
त्यतंआह तेचमनसिवर्त्तमानाः सांसारिकेपुरुषेव्यप
दिश्यंते कस्मात्सहितत्फलस्यभोक्ताचेतयितेति तस्मा
त्पुरुषत्वादीश्वरस्यापितत्संबंधःप्राप्तइतितत्प्रतिषेध
उपपद्यतेइत्याह योह्यनेनबुद्धिस्थेनापि पुरुषमात्रसा
धारणेनभोगेनापरामृष्टः सपुरुषविशेषईश्वरः विशि
ष्यतेइतिविशेषः पुरुषांतराद्व्यवच्छिद्यते विशेषपद
स्यावस्थांदर्शयितुकामः परिचोदनापूर्वंपरिहरति कै
वल्यंप्राप्तास्तर्हीति प्रकृतिलयानांप्राकृतोबंधःवैका
रिकोविदेहानां दक्षिणादिबंधोदिव्यादिव्यविषयभो
गभाजांतान्यमूनित्रीणिबंधनानि प्रकृतिभावनासं
स्कृतमनसोहि देहपातानंतरमेवप्रकृतिलयतामा
पन्नाइतीतरेषांपूर्वाबंधकोटिःप्रज्ञायतेतेनोत्तरको
टिविधानमात्रमिहतुपूर्वापरकोटिनिषेधइतिसंक्षिप्य
विशेषंदर्शयति सतुसदैवमुक्तःसदैवेश्वरइति ज्ञान
क्रियाशक्तिसंपदैश्वर्यं अत्रप्रकृति योसाविति ज्ञान
क्रियेहि चितिशक्तेरपरिणामिन्याःसंभवतइति रजस्त
मोरहितं

दामुक्तस्याविद्याप्रभवःचित्तसत्त्वसमुत्कर्षेणसहस्व
स्वामिभावसंबंधःसंभवतीत्यतउक्तंप्रकृष्टसत्त्वोपा-

त्तसत्त्वेनस्वस्वामिभावःकिंतुतापत्रयपरीतान्नृणा

भावमहार्णवान्जंतूनुद्धरिष्यामिज्ञानधर्मोपदेशेन
नचज्ञानक्रियासामर्थ्यातिशयसंपत्तिमंतरेणतदुपदे
शेनचेयमपहतरजस्तमोमलविशुद्धसत्वोपादानं वि
नेत्यालोच्यसत्वप्रकर्षमुपादत्तेभगवानपरामृश्योप्य
विद्यया ऽविद्याभिमानिनीवाविद्यायास्तत्वमविद्वान्
भवतिनपुनरविद्यांह्यविद्यात्वेनसेवमानः नखलुशै
लूषोरामत्वमारोप्यतास्ताश्चेष्टादर्शयन्भ्रांतोभवति
तदिदमाहार्यमस्यरूपंननात्विकमितिस्यादेतदुदि
धीर्षयाभगवतासत्वमुपादेयंतदुपादानेनचतदुद्दिधी
र्षास्याअपिप्राकृतत्वात्तथाचान्योन्यसंश्रयइत्य
तउक्तंशाश्वतिकइतिभवेदेतदेवंयदीदंप्रथमसा-
सर्गस्यनवेदनादौतुसर्गसंहारप्रबंधेसर्गांतरसमुत्प
न्नसंजिहीर्षोवधिसमयेपूर्णेमयासत्वप्रकर्षउपादे
यइतिप्रणिधानं कृत्वा भगवान् जगत्संजहार
तदाचेश्वरचित्तसत्वप्रणिधानवासितंप्रधानसाम्यमु
पगतमपिपरिपूर्णेमहाप्रलयावधौप्रणिधानवासना
वशात्तथैवेश्वरचित्तसत्वभावेनपरिणमतेयथाचैत्र-
श्वःप्रातरेवोत्थातव्यंमयेतिप्रणिधायसुप्तस्तदैवो
त्तिष्ठतिप्रणिधानसंस्कारात् तस्मादनादित्वादीश्व
रप्रणिधानसत्वोपादानयोःशाश्वतिकत्वेननान्यो
न्यसंश्रयः नचेश्वरस्यचित्तसत्वंमहाप्रलयेपिनप्र
कृतिसाम्यमुपैतीतिवाच्यं यस्यदिनकदाचिदपिप्र

धानसाम्यंनतस्माधानिकंनापिचितिशक्तिः अज्ञत्वा
त् इत्यर्थांतरमप्रमाणिकमापद्येतनच्चायुक्तंप्रकृति
पुरुषव्यतिरेकेणार्थांतराभावात् सोयमीदृशईश्वर
स्यशाश्वतिकउत्कर्षः किंसनिमित्तःसप्रमाणिकःआ
होस्विन्निर्निमित्तोनिष्प्रमाणकइति उत्तरंतस्यशा=
स्त्रनिमित्तं श्रुतिस्मृतीतिहासपुराणानिशास्त्रंचोद्य
ति शास्त्रंपुनःकिंनिमित्तं प्रत्यक्षानुमानपूर्वंहि शा=
स्त्रं नचेश्वरस्यसत्वप्रकर्षे कस्यचित्प्रत्यक्षमनुमा
नंवास्ति नचेश्वरप्रत्यक्षप्रभवंशास्त्रमितियुक्तंक
ल्पयित्वापिह्ययंस्वयंब्रूयादात्मैश्वर्यप्रकाशनाये=
तिभावः परिहरति प्रकृष्टसत्वनिमित्तं अयमभि=
संधिः मंत्रायुर्वेदेषुतावदीश्वरप्रणीतेषु प्रवृत्तिसा
मर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यंसिद्धंन
चौषधिभेदानांतत्संयोगविशेषाणांच मंत्राणांच
तत्तद्वर्णावापोद्धारेणसहस्रेणापिपुरुषायुषैर्लौकि
कप्रमाणव्यवहारीशक्तः कर्तुमन्वयव्यतिरेकौ न
चागमव्यतिरेकौताभ्यांचागमस्ततंतानयोरनादि
त्वादित्वादितिप्रतिपादयितुंयुक्तं महाप्रलयेतत्सं
तानयोर्विच्छेदात् नच तद्भावेप्रमाणाभावः अभिलं
प्रधानविकारोजगदितिहिप्रतिपादयिष्यते सदृ
शपरिमाणस्यविसदृशपरिणामतादृष्टायथा क्षी
रेक्षुरसादेर्दधिगुडादिरूपंविसदृशपरिणामस्य=

साम्यविनिर्मुक्तिमाह नचतत्समानमिति प्राकाम्यम
मविहितेछता तद्विघातादूनत्वं अनूनत्वेवा द्वयोरपि
प्राकाम्यविघातःकार्यानुत्पत्तिरुत्पत्तौवा विरुद्धधर्म
समालिंगितमेकदा कार्यमुपलभ्येतेत्याशयवाना
ह द्वयोश्चेति अविरुद्धाभिप्रायत्वेवा प्रत्येकमीश्वर
त्वेकृतमन्यैरेकेनेवेशनायाः कृतत्वात् संभूयकारि
त्वेवानकश्चिदीश्वरःपरिषद्वत् नित्येशनायोगिनां
चपर्यायायोगात्कल्पनागौरवप्रसंगाच्चेतिद्रष्टव्यं
तस्मात्सर्वमवदातं एवमस्यक्रियाज्ञानशक्तौ शा
स्त्रंप्रमाणमभिधायज्ञानशक्तावनुमानंप्रमाणयति
किंच तत्रनिरतिशयं सर्वज्ञबीजं व्याचष्टेयदिदमि
ति बुद्धिसत्वावरकतमोपशमतारतम्येनयदिदम
तीतानागतप्रत्युपपन्नानां प्रत्येकंच समुच्चयेनच
वर्त्तमानानामतींद्रियाणांग्रहणंतस्यविशेषणमल्प
ल्पं बह्विति सर्वज्ञबीजंकारणं कश्चित्किंचिदेवातीं
तादिगृण्हाति कश्चिद्बहुकश्चिद्बहुतरंकश्चिद्बहुत
ममितिग्राह्यापेक्षयाग्रहणस्याल्पत्वंबहुत्वंकृतं ए
तद्धिवर्धमानंयत्रनिःक्रांतमतिशयात्ससर्वज्ञ इ
ति तदनेनप्रमेयमात्रंकथितं अत्रप्रमाणयति अ
स्तिकाष्ठाप्राप्तिः सर्वज्ञबीजस्येति साध्यनिर्देशः
निरतिशयत्वंकाष्ठायतःपरमतिशयवत्तानास्ती
तितेननावधिमात्रेणसिद्धसाधनं सातिशयत्वा

दितिहेतुर्यत्सातिशयंतत्तत्सर्वेनिरतिशयं यथाकुवलामलकबिल्वेषुसातिशयंसहत्वमात्मनिनिरतिशयमितिव्याप्तिंदर्शयति परिमाणवत् नन्वगरिमादिभिर्गुणैर्व्यभिचारइतिसांप्रतम् नखल्ववयवगरिमातिशयोगरिमावयविनःकिंत्वापरमाणुभ्यआंत्यावयविभ्योयावंतःकेचनतेषांप्रत्येकवर्तिनोगरिम्णःसमाहृत्यगरिमवर्द्धमानाभिमानः ज्ञानंतु नप्रतिज्ञेयंसमाप्यतइत्येकद्विबहुविषयतयायुक्तंसातिशयमितिनव्यभिचारः उपसंहरति यत्रकाष्ठेति ननुसंतिबहवस्तीर्थकरा बुद्धार्हतकपिलर्षिप्रभृतयस्तत्कस्मात्तएवसर्वज्ञानभवंत्यस्मादनुमानादित्यतआह सामान्येतिकुतस्तर्हि तद्विशेषप्रतिपत्तिरित्यतआह तस्येति बुद्धादिप्रणीतआगमाभासोन त्वागमः सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेनविप्रलंभकत्वादितिभावः तेनश्रुतिस्मृतीतिहासपुराणलक्षणादागमतः आगच्छंति बुद्धिमारोहंति अस्मादभ्युदयनिःश्रेयसोपायाइत्यागमः तस्मात्संज्ञादिविशेषप्रतिपत्तिः संज्ञाविशेषः शिवेश्वरादिःश्रुत्यादिषुप्रसिद्धः आदिपदेनषडंगतादशाव्ययत्वेसंगृहीते तथोक्तंवायुपुराणे सर्वज्ञतातृप्तिरनादिबोधःस्वतंत्रतानित्यमलुप्तशक्तिः अनंतशक्तिश्चविभोर्विधिज्ञाःषडाहुरंगानिमहेश्वरस्य तथा ज्ञानंवैराग्यमैश्वर्यंतपःसत्यंक्षमाधृ

तिस्तथात्वमात्मसंबोधोह्यधिगतात्त्वमेवचअव्ययानि द
र्शितानिनित्यंतिष्ठंतिशंक रइति स्यादेन्निस्यन्तस्यभग
वतोवैराग्यातिशयसंपन्नस्य स्वार्थेत्वस्यासंभवात्का
रुणिकस्यच सुखैकतानजनसर्जनपरस्य दुःखबहुलजी
वलोकजननानुपपत्तेरप्रयोजनस्यचप्रेक्षावतःप्रवृत्त्य
नुपपत्तेःक्रियाशक्तिशालिनोपिनजगत्क्रियेत्यतआ
हतस्यात्मानुग्रहाभावेपीति भूतानांप्राणिनामनुग्र
हःप्रयोजनंशब्दाद्युपभोगविवेकख्यातिरूपकार्यक
रणात् किलचरितार्थेचित्तेनिवर्त्ततेततःपुरुषःकेवलो
भवति अतस्तत्प्रयोजनायकारुणिकोविवेकख्यात्यु
पायंकथयति तेनाचारितार्थत्वात् चित्तस्यजंतूनोभ्वः
रःपुण्यापुण्यसहायःसुखदुःखेभावयन्नपिनाकारुणि
कः विवेकख्यात्युपायकथनाय भूतानुग्रहहारमाह
ज्ञानधर्मोपदेशेनेति ज्ञानंच धर्म व ज्ञानधर्मौतयो
रुपदेशेनज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिप
रिपाकात् कल्पप्रलयेब्रह्मणोदिनावसाने यत्र सत्य
लोकवर्ज्जंजगदस्तमेतिमहाप्रलयेससत्यलोकस्यब्र
ह्मणोपिनिधने संसारिणः कारणगामिनोऽतस्तदामर
णदुःखभाजः कल्पेत्युपलक्षणं अन्यदापि स्वार्जितक
र्मपाकवशेनजन्ममरणादिभाजःपुरुषानुद्धरिष्यामीति
कैवल्यंप्राप्यपुरुषाउद्धताभवंतीत्यर्थः एतच्चकरुणाप्र
युक्तस्यज्ञानधर्मोपदेशनंकापिलानामपिसिद्धमित्याह

तथाचोक्तंपंचशिखाचार्येण आदिविद्वान्कपिलइति आदिविद्वानितिपंचशिखाचार्यवचनं आदिमुक्त स्व संतानादिगुरुंविषयनत्वनादिमुक्तपरमगुरुविषयं आदिमुक्तेषुकदाचिन्मुक्तेषुविद्वत्सुकपिलोस्माकमादिविद्वान्मुक्तःसएवचगुरुरिति कपिलस्यापिजायमानस्यमहेश्वरानुग्रहादेवज्ञानप्राप्तिः श्रूयतेइति कपिलोनामविष्णोरवतारविशेषःप्रसिद्धः स्वयंभूर्हिरण्यगर्भःतस्यापिसांख्ययोगप्राप्तिर्वेदेश्रूयतइति सएवेश्वरःआदिविद्वान्कपिलोविष्णुर्नस्वयंभूरितिभावःस्वायंभुवानांत्वीश्वरइतिभावः संप्रतिभगवतोब्रह्मादिभ्योविशेषमाहसएषइतिपातनिका सएषइति सूत्रं पूर्वेषामपिगुरुःकालेनानवच्छेदात् व्याचष्टे पूर्वेहीति कालस्तुशतवर्षादिःअवच्छेदार्थेनअवच्छेदेनप्रयोजनेन नोपावर्ततेनवर्तते प्रकर्षस्यगतिःप्राप्तिः प्रसेतव्यआगमात् तदनेनप्रबंधेनभगवानीश्वरो दर्शितःसंप्रतितत्प्रणिधानंदर्शयितुंतस्यवाचकमाह तस्यवाचकः प्रणवः व्याचष्टे वाच्यइति तत्रपरेषांमतविमर्शद्वारेणोपन्यस्यति किमस्येति वाचकत्वंप्रतिपादकत्वमित्यर्थः परेहिपश्यंतियदिस्वाभाविकःशब्दार्थयोःसंबंधःसंकेतेनास्माच्छब्दादयमर्थःप्रसेतव्यइत्येवमात्मके – नाभिव्यज्येत ततोयत्रनास्तिसंबंधस्तत्रसंकेतशतेनापि नव्यज्येत नहिप्रदीपव्यंग्यो घटोयत्रनास्तितत्र

नास्तितत्रप्रदीपसहस्रेणापिशक्यो व्यंक्तुं कृतसंकेत
स्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः ततः सं
केतकृतमेव वाचकत्वमितिविमृश्याभिमतमवधार
यति स्थितोस्येति अयमभिप्रायः सर्वएवशब्दाःसर्वा
कारार्थाभिधानसमर्थाइति स्थितएवैषांसर्वाकारै
रर्थैः स्वाभाविकः संबंधईश्वरसंकेतस्तुप्रकाशकश्च
नियामकश्च तस्यईश्वरसंकेतासंकेतकृतश्चास्यवा
चकापभ्रंशविभागः नदिदमाह संकेतस्त्वीश्वरस्येति
निदर्शनमाह यथेति ननुशब्दस्यप्राधानिकस्यमहाप्र
लयसमयेप्रधानभावमुपगतस्यशक्तिरपिप्रलीनात
तोमहदादिक्रमेणोत्पन्नस्यावाचकस्येवमाहेश्वरेणसं
केतेननशक्यावाचकशक्तिरभिज्वलयितुंविनष्टश
क्तित्वादित्यतआह सर्गांतरेष्वपीति यद्यपिसहशक्त्या
प्रधानसाम्यमुपगतःशब्दस्तथापिपुनराविर्भवंस्तच्छ
क्तियुक्तएवाविर्भवति वर्षातिपातसमधिगतमृद्भाव
दृग्धोद्भिज्जोमेघविसृष्टवारिधारासारावसेकात् तेनपू
र्वसंबंधसंकेतानुसारेणसंकेतः क्रियतेभगवताइ
तितस्मात्संप्रतिपत्तेः सदृशव्यवहारपरंपरयानित्य
तया नित्यःशब्दार्थयोःसंबंधो नकूटस्थनित्यइत्याग
मिकाः प्रतिजानतेतेनपुनरागमानिरपेक्षाःसर्गांतरेष्व
पितादृशएवसंकेतइतिप्रतिपत्तुमीशतइतिभावः वा
चकमाख्यायप्रणिधानमाह तज्जपस्तदर्थभावनंव्या

चष्टे प्रणवस्येति भावनं पुनःपुनश्चेतसि निवेशनं ततः किं सिध्यतीत्यत आह प्रणवमिति एकस्मिन् भगवति आरमति चित्तं अत्रैव वैयासिकी गाथामुदाहरति तथा चेति ततईश्वरः समाधितत्फललाभेन तमनुगृह्णाति किंचापरमस्मात् ततः प्रत्यक्चेतनाधिगमोप्यंतरायाभावश्च प्रतीपं विपरीतमंचति किंजानातीति प्रत्यक्स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः तदनेनेश्वरात् शाश्वतिकसत्वोत्कर्षसंपन्नात् विद्यावतो निवर्तयति प्रतीचश्चेतनस्याधिगमो ज्ञानं स्वरूपतोस्य भवति अंतराया वक्ष्यमाणास्तदभावश्च॥ अस्य विवरणं एतावदिति स्वमालातस्य रूपरूपग्रहणेनाविद्यासमारोपितान् धर्मान्निषेधति नन्वीश्वरप्रणिधानमीश्वर विषयं कथमिव प्रत्यक्चेतनं साक्षात्करोत्यतिप्रसंगादित्यत आह यथैवेश्वर इति शुद्धः कूटस्थनित्यत्वयोदयव्ययरहितः प्रसन्नः क्लेशवर्जितः केवलः धर्माधर्मापेतः अतश्चानुपसर्गः उपसर्गा जात्यायुर्भोगाः सादृश्यस्य किंचिद्बुद्ध्यधिष्ठानत्वादीश्वरात् भिनत्ति बुद्धेः प्रतिसंवेदीति तदनेन प्रत्यग्ग्रहणं व्याख्यातं अत्यंतविधर्मिणोरन्यतरार्थानुचिंतनं न तदितरस्य साक्षात्काराय कल्पते सदृशार्थानुचिंतनं तु सदृशांतरसाक्षात्कारोपयोगितामनुभवति एकशास्त्राभ्यासदनतसदृशार्थशास्त्रांतरज्ञानोपयोगितां प्रत्यासत्ति

स्तुस्वात्मनिसाक्षात्कारहेतुर्नपरात्मनीतिसर्वमवदातं
१८तिअथकइतिसामान्येनोत्तरं यइति विशेष संक्षेप
ऽत्तिकइतिउत्तरं व्याधीत्यादिसूत्रंअंतरायानवस्ताश्चि
त्तयोयोगांतरायायोगविरोधिनश्चित्तस्यविक्षेपकाःचित्तं
खल्वमीव्याध्यादयोयोगाद्विक्षिपंतिअपनयंतीतिविक्षेपाःयो
गप्रतिपक्षत्वे हेतुमाह सहेतइति संशयभ्रांतिदर्शने
तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ येपि नवृत्तयो
व्याधिप्रभृतय स्तेपि वृत्तिसाहचर्यात्तत्प्रतिपक्षाइत्य
र्थःपदार्थान्व्याचष्टे व्याधिरिति धातवोवातपित्तश्लेष्मा
णःशरीरधारणात् अशितपीताहारपरिणामविशेषोर
सःकरणानीन्द्रियाणि तेषांवैषम्यंन्यूनाधिकभावइति
अकर्मण्यताकर्मानर्हता संशयउभयकोटिस्पृग्विज्ञा
नं स्यादेवमिदंनैवंस्यादिति नववदुद्विष्ठयोःसंशयविषयोस्सयोरभेदे
उभयकोटिस्पर्शोस्पर्शरूपाःवांतरविशेषविवक्षयाप्र
भेदेनोपन्यासः अभावनमकरणंतत्राप्रयत्नइतियां
वत् कायस्यगुरुत्वं कफादिना चित्तस्यगुरुत्वंतमसा
गर्धस्तृष्णामधुमत्यादयःसमाधिभूमयःलब्धभूमिये
दितावतेवसुस्थितंमन्यस्य समाधिभ्रंशःस्यात्ततस्त
स्याअपिभूमेरपायःस्यात्यस्मात्समाधिप्रतिलंभेतद
वस्थितंस्यात्तस्मात्तत्रप्रतिपत्तव्यमिति॥ नकेवलंन
वांतरायादुःखादयोप्यस्यतत्सहभुवोभवंतीत्याहदुः
खेत्यादिप्रतिकूलवेदनीयंदुःखं आध्यात्मिकंशारीर

व्याधिवशात् मानसं कामादिवशात् आधिभौतिकं व्या
घ्रादिजनितं आधिदैविकं ग्रहपीडादिजनितम् तच्चे
दं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्या
ह येनाभिहता इति अनिच्छतः प्राणो यद्बाह्यं वायुमाचा
मति पिबति प्रवेशयतीति यावत् स श्वासः समाध्यंग रे
चकविरोधी अनिच्छतोपि प्राणो यत्कौष्ठ्यं वायुं निश्चार
यति निःसारयति स प्रश्वासः समाध्यंग पूरकविरोधी उ
क्तार्थोपसंहारसूत्रमवतारयति अथैतद् इति उक्तार्था
र्थानंतरमुपसंहरन्निदं सूत्रमाहेति संबंधः निरोद्धव्यत्वे
हेतुरुक्तः समाधिप्रतिपक्षादिति यद्यपीश्वरप्रणिधा=
नादिरभ्यासमात्रमुक्तं तथापि वैराग्यमिह तत्सहका
रितया ग्राह्यमित्याह ताभ्यामुक्तलक्षणाभ्यामेवाभ्या
स वैराग्याभ्यां निरोद्धव्याः तत्र तयोरभ्यासवैराग्ययो=
र्मध्ये अभ्यासस्यानंतरोक्तस्येति तत्प्रतिषेधार्थमित्या
दि एकतत्त्वमीश्वरः प्रकृत्वादिति वैनाशिकानां तत्सर्व
मेकाग्रमेव चित्तं नास्ति किंचिद्विक्षिप्तमिति तदुपदे=
शानां तदर्थानां च प्रवृत्तीनां वैयर्थ्यमित्याह यस्येति
सि यस्य मते प्रत्यर्थे अर्प्यमाणे एकस्मिन्ननेकस्मिन्वा नि
यतं यावदर्थाभासमुत्पन्नं तत्रैव समाप्तमनन्यगामि=
अर्थांतरं तावदस्पृश्यमगृहीत्वार्थांतरमपि पश्चात्कस्मान्न
गृह्णातीत्यत्राह क्षणिकं च क्षणस्याभेद्यत्वेन पूर्वप
श्चादुभयस्याप्यभावः असत्त्वमेव क्षणिकं चित्तं स्ववि

षयेएकस्मिन्ननेकस्मिन्वानवस्थितंप्रतिक्षणंतत्तद्वि
षयेपादानंपरित्यागाभ्यांविषयान्तिं यतंविक्षिप्तमतो
विक्षेपपरिणाममपनीयशक्यैकाग्रताधातुमितितदुप
देशप्रकृत्योर्नानर्थक्यमित्याद्यपक्षंपुनरिदमिति-उपसं
हरति अतोनेति वैनाशिकमुत्थापयति योपीति माभूदे
कस्मिन्क्षणिके चित्तएकाग्रताधानप्रयत्नःचित्तसंतानि
निलनाद्यवक्षणिके विक्षेपमपनीयएकाग्रताधास्य
वदप्यर्थः तदेतद्विकस्यदूषयति तस्यदर्शनेएकाग्रता
यदिप्रवाहचित्तस्यचित्तसंतानस्यवाधर्मःतन्नैकक्रम
वदुत्पादेषुप्रत्ययेष्वनुगतंनास्तिप्रवाहचित्तंकुतोय
यावदस्तितस्यसर्वस्यक्षणिकत्वादक्षणिकस्यचा
सत्वादवस्तुत्वादर्शनइतिभावः द्वितीयंकल्पं गृह्णातिअ
थेतिसांवृत्तस्यप्रवाहस्यांशःप्रत्ययःपरमार्थसन्त
स्यप्रत्ययस्यैकाग्रताप्रयत्नसाध्योधर्मःदूषयतिसस
र्वःसांवृत्तप्रवाहापेक्षयासदृशप्रवाहीवाअतःपरमा
र्थसत्तारूपेणप्रत्यर्थेनियतत्वात्यदर्थाभासउत्पन्न
स्तत्रसमाप्तत्वादेकाग्रएवेतिविक्षिप्तचित्तानुपपत्ति
यदंपनयेनैकाग्रताधीयतेइति ७ उपसंहरति तस्मा
दिति इतोपिचित्तमेकमनेकार्थमवस्थितंचेत्याह य
दिचेति यथाहिमैत्रेणाधीतस्य शास्त्रस्य नचैत्रःस्मर
तियथा मैत्रेणोपचित्तस्यपुण्यस्यपापस्यवाकर्माश
यस्यफलंतदसंबंधीचैत्रोनभुंक्तेएवंप्रत्ययांतरदृष्ट

स्यप्रत्ययांतरंनस्मरेत् प्रत्ययांतरोपचितस्यवाकर्मा
शयस्यफलंनप्रत्ययांतरमुपभुंजीतेत्यर्थः ननुनातिप्र
सज्यतेकार्यकारणभावेसतीतिविशेषणात् आह्वै
श्वानरीयेष्ट्यादौवकर्तृमातृपितृपुत्रादिगामिफलद
र्शनात् मधुररसभावितानांवा आम्रबीजादीनांपरंप
रयाफलमाधुर्यनियमादित्यतआह समाधीयमान
मप्येतदिति अयमभिसंधिः कःखल्वेकसंतानवर्ति
नांप्रत्ययानांसंतानांतरवर्तिभ्यः प्रत्ययेभ्योविशेषोये
नैकसंतानवर्तिनाप्रत्ययेनानुभूतस्योपचितस्यक
र्माशयस्यतत्संतानवर्त्येवप्रत्ययः स्मर्ताभोक्ताच
स्यात् नान्यसंतानवर्तीनहिसंतानोनामकश्चिद
स्तिवस्तुसन् यएनं संतानिनंसंतानांतरवर्तिभ्योभिं
द्यात् नचकाल्पनिकोभेदःक्रियायामुपपद्यतेनख
लुकल्पिताग्निभावोमाणवकःपचति नच कार्य
कारणसंबंधोपिवास्तवःसहभुवोःसव्येतरविषाण
योरिवाभावात् असहभुवोरपिप्रत्युत्पन्नाश्रयत्वा
योगात् नह्यतीतानागतौव्यासज्यप्रत्युत्पन्नं वर्तितु
मर्हतः तस्मात्संतानेनवाकार्यकारणभावेनवास्वा
भाविकेनानुपहिताःपरमार्थसंतःप्रत्ययाःपरस्पर
संस्पर्शित्वेनस्वसंतानवर्तिभ्यःपरसंतानवर्तिभ्योवा
प्रत्ययांतरेभ्योनभिद्यंतेसोयंगोमयंचपायसंचाधि
कृत्यप्रवृत्तोन्यायोगोमयंपायसंगव्यत्वादुभयसि

दुपायसंपदिति तमाक्षिपति न्यायाभासस्त्वनं ततो
प्यधिकत्वादिति नन्वत्र कृतनाशाकृताभ्यागमं चोद्यं
यतश्चित्तमेव कर्मणां कर्तृ तदेव तज्जनिताभ्यां सुख
दुःखाभ्यां युज्यते सुखदुःखे च चितिच्छायापन्नं चित्तं
भुंक्त इति पुरुषे भोगाभिमानः चितिचित्तयोरभेदग्र
हादिति स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभाव एवै
षां तादृशो यत्त एव स्मरंति फलं चोपभुंजते न त्वन्येन
च स्वभावाभियोगपर्यनुयोगावर्हति एवं भवतु मैवं
भूतेनिवा कस्मान्नैवमिति चेति यः पूर्वोक्तेन परितुष्य
ति तं प्रत्याह किं चस्वात्मेति उदयव्ययधर्माणामनुभ
वानामनुभवस्मृतीनां च नानात्वेपि तदाश्रयमभिन्नं
चित्तमहमिति प्रत्ययः प्रतिसंदधानः कथमत्यंतभि
न्नान्प्रत्ययानालंबेत ननु ग्रहणास्मरणस्य कारण
भेदात्पारोक्ष्यापारोक्ष्यरूपविरुद्धसंसर्गाद्वा न प्रत्यभि
ज्ञानं नाभेकः प्रत्ययः यतः प्रत्ययिनश्चित्तस्यैकतास्या
दित्यत आह स्वानुभवेति ननु कारणभेदविरुद्धधर्म
संसर्गावत्र बाधकावुक्तावित्यत आह न च प्रत्यक्षस्ये
ति प्रत्यक्षानुसारत एव सामग्र्यभेदः पारोक्ष्यापारोक्ष्य
धर्मो विरुद्धश्चोपपादितो न्यायकणिकायां ब्रह्मणि
कस्य चार्थक्रियान्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्या
मुपपादितेति सर्वमवदातं अपरिकर्मितमनसोस्य
यादिमतः समाधितदुपायसंपत्त्यनुत्पादाच्चित्तप्र

सादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुप
क्रमते यस्य चित्तस्यावस्थितस्येदमिति मैत्रीकरुणे
त्यादिप्रसादनांतं सुखितेषु मैत्रीं सौहार्दं भावयता
ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य दुःखितेषु च करुणा
मात्मनीव परस्मिन्दुःखप्रहाणेच्छां भावयतः पराप
कारचिकीर्षाकालुष्यं चेतसो निवर्त्तते पुण्यशीलेषु प्रा
णिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्त
ते अपुण्यशीलेषु चोपेक्षां माध्यस्थं भावयतोऽमर्ष
कालुष्यं निवर्तते ततश्चास्य राजसतामसधर्मनिवृत्तौ
सात्विकः शुक्लो धर्म उपजायते सत्वोत्कर्षसंपन्नः संभ
वति वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसी
दति प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्यः एकाग्रं स्थिति
पदं लभते असत्यां पुनर्मैत्र्यादेर्भावनायां न ते उपा
याः स्थित्यैकल्पंते तानिदानीं स्थित्युपायानाह प्र
च्छर्दनविधारणाभ्यां वा प्राणस्य वाशब्दो वक्ष्यमाणोपा
यांतरापेक्षा विकल्पार्थः न मैत्र्यादिभावनापेक्षया त
या सह समुच्चयात् प्रच्छर्दनं विवृणोति कोष्ठस्येति
प्रयत्नविशेषात् योगशास्त्रविहितात् येन कोष्ठ्यो वायुः
नासिकापुटाभ्यां शनैः रेच्यते विधारणं विवृणोति वि
धारणं प्राणायामः रेचितस्य प्राणस्य कोष्ठ्यस्य वायोर्य
दायामो बहिरेव स्थापनं न तु सहसा प्रवेशनं तदेता
भ्यां प्रच्छर्दनविधारणाभ्यां वायोर्लघुकृतशरीरस्य मनः

नःस्थितिपदंलभते अत्रचोत्तरसूत्रगतास्थितिनि
बंधनीतिपदात्स्थितिग्रहणमाकृष्यसंपादयेदित्यर्थ
प्राप्तेनसंबंधनीयंस्थित्युपायांतरमाह विषयवती॰
वाप्रवृत्तिरुत्पन्नामनसःस्थितिनिबंधनी व्याचष्टेना
सिकाग्रेधारयतइति धारणाध्यानसमाधीन्कुर्वतस्त
ज्जयात्घ्राणादिव्यगंधसंवित्तसाक्षात्कारः एवमन्यास्व
पिप्रवृत्तिषुयोज्यं एतच्चागमात्प्रत्येतव्यंनोपपत्ति
नःस्यादेतत् किमेताद्दृग्भिर्वृत्तिभिःकैवल्यप्रत्यनुप
योगिनीभिरित्यतआह एतावत्तयोल्पेनैवकालेनोत्प
न्नाश्चित्तमीश्वरविषयायांवाविवेकख्यातिविष
यायांवास्थितौनिबध्नंति नन्वन्यविषयावृत्तिःकथम
न्यत्रस्थितिंनिबध्नातीत्यतआह संशयंविधमंतिअप
सारयंति अतएवसमाधिप्रज्ञायांइति वस्त्वंतराणाम
प्यागमसिद्धानांविषयवत्त्वमतिदिशति एतेनेतिनन्वा
गमादिभिरवगतेष्वर्थेषु कुतःसंशयइत्यतआह यद्य
पिहीति श्रद्धामूलोहियोगउपदिष्टार्थैकदेशप्रत्यक्षी
करणेचश्रद्धातिशयोजायतेतन्मूलाश्चध्यानादयोस्या
प्रत्यूहंभवंतीत्यर्थः विशोकावाज्योतिष्मतीविगतशो
कादुःखरहिताज्योतिष्मतीज्योतिरस्मात्अस्तीतिज्यो॰
तिष्मतीप्रकाशरूपा हृदयपुंडरीकइति उदरोरसोर्म
ध्येयत्पद्मंअधोमुखंतिष्ठति अष्टदलंरेचकप्राणायामे
नतदूर्द्ध्वमुखंकृत्वा तत्रचित्तंधारयेत् तन्मध्येसूर्यमं

डलंअकारोजागरितस्थानं तस्योपरिचंद्रमंडलंउका
रःस्वप्नस्थानंतस्योपरिवन्हिमंडलं मकारःसुषुप्तिस्थानं
तस्योपरिपरंव्योमात्मकं ब्रह्मनादंतुरीयस्थानमर्द्धमात्र
मुदाहरति ब्रह्मवादिनःतत्कर्णिकायामूर्धमुखीसूर्यादि
मंडलमध्यगा ब्रह्मनडी ततोप्यूर्द्धंप्रवृत्तासुषुम्नानाम
नाडी तयाखलुवाह्यान्यपिसूर्यादीनिमंडलानिप्रोक्तानि
साहिचित्तस्थानंतस्यांधारयतोयोगिनश्चित्तसंविदुपज
जायतेउपपत्तिपूर्वकंबुद्धिसंविदःआकारमादर्शयतिबु
द्धिसत्वंहीतिआकाशकल्पमितिव्यापितामाह स्वप्रदीनां
प्रभास्तासांरूपंतदाकारेणविकल्पतेनानारूपाभवति
मनश्चात्रबुद्धिरभिमतं नतुमहत्तत्वं तस्यचसुषुम्नास्थ
स्यवैकारिकाहंकारजन्मनःसत्वबहुलतयाज्योतीरूप
ताविवक्षिता तत्तद्विषमगोचरतयाच व्यापित्वमपिसि
द्धं अस्मितायामेमनसि समापत्तिंदर्शयित्वाऽस्मितास
मापत्तेःस्वरूपमाह तथेति शांतमपगतरजस्तमस्तरंगं
अनंतंव्यापि अस्मितामात्रनपुनर्नानाप्रभारूपं आगमां
तरेण स्वमतंसमीकरोति यत्रेदमुक्तंपञ्चशिखेनतमणुं
दुरधिगमत्वादात्मानमहंकारास्पदमनु विद्यानुचिंत्या=
स्मीत्येवंतावज्जानीतइतिस्यादेतत् नानाप्रभारूपाभव
तुज्योतिष्मतीकथंअस्मितामात्ररूपाज्योतिष्मतीत्यत
आह एषाद्वयीति विधूतरजस्तमोमलास्मितेवसत्वम
योज्योतिरितिभावः विविधायाअपिज्योतिष्मत्याःफलम्

हमाह यथेति वीतरागविषयवाचित्तं वीतरागाः कृष्ण
द्वैपायनप्रभृतयः तेषांचित्तं तदेवावलंबनं तेनोपरक्त
मिति स्वप्ननिद्राज्ञानालंबनंवा यदाखल्वयंस्वप्नेविवि
क्तवनसन्निवेशवर्त्तिनीमुत्कीर्णामिवचंद्रमंडलात्
कोमलमृणालशकलानुकारिभिरंगप्रत्यंगैरुपेतामभि
चंद्रकांतमणिमयीमतिसुरभिमालतीमल्लिकामाला=
हारिणींमनोहरांभगवतो महेश्वरस्यप्रतिमामाराधय
न्नेवप्रबुद्धः प्रसन्नमनास्तदातामेवस्वप्नज्ञानावलंब
नीभूतामनुचिंतयतस्तस्यतदेकाकारमनसस्तत्रैव
चित्तंस्थितिपदंलभते निद्राचेह सात्विकीगृहीतव्या
यस्यांप्रबुद्धस्य सुखमहमस्वाप्समितिप्रत्यवमर्शो
भवति सकाग्रंहिलस्यांमनोभवति तावन्मात्रेणचो
क्तं एतदेवब्रह्मविदोब्रह्मणोरूपमुदाहरंति सुखा
वस्थेति ज्ञानंचज्ञेयरहितं नशक्यंगोचरयितुमि=
तिज्ञेयमपिगोचरीक्रियते यथाभिमतध्यानाद्वा किं
बहुनायदेवाभिमतं तत्तदेवतारूपमिति कथंपु
नः स्थितिपदमासीभावोवगंतव्य इत्यतआह पर
माणुपरममहत्त्वांतोस्यवशीकारः व्याचष्टे सूक्ष्म
इतिउक्तमर्थंपिंडीकृत्य वशीकारपदार्थमाह ए
वंतामुभयीमिति वशीकारस्यावांतरफलमाह तद्वशी
कारादिति तदेवंचित्तस्थितेरुपायादर्शिताः लब्धस्थि
तिकस्यवशीकारोपिदर्शितः संप्रति लब्धस्थितिकस्य

चेतसः किंविषयः किंरूपश्चसंप्रज्ञातोभवतीतिपृच्छ
तिअथेति अत्रोत्तरंसूत्रमवतारयति तदुच्यतइतिसू
त्रंपठति क्षीणवृत्तेरित्यादिसमापत्यंतं तद्व्याचष्टे क्षी
णोति अभ्यासवैराग्याभ्यांक्षीणराजसतामसप्रमाणा
दिवृत्तेश्चित्तस्यतस्यव्याख्यानंप्रत्यस्तमितप्रत्ययस्येति
तदनेनचित्तसत्वस्यस्वभावस्वच्छस्यरजस्तमोभ्यामन
भिभवउक्तः दृष्टांतंस्पष्टयति यथेति उपाश्रयउपाधि
जपाकुसुमादिः उपरक्तस्तच्छायापन्नः उपाश्रयस्यय
दात्मीयंरूपंलोहितनीलादितदेवाकारस्तेनलक्षितो
निर्भासते दार्ष्टांतिकेयोजयति तथाग्राह्येति ग्राह्यंचत
दालंबनंचतेनोपरक्तंतदनुविद्धं तदनेनग्रहीतृग्रह
णाभ्यांव्यवच्छिनत्ति आत्मीयमंतःकरणरूपमपिधाय
ग्राह्यसमापन्नंग्राह्यतामिवप्राप्तमितियावत् अतोग्रा
ह्यस्वरूपाकारेणनिर्भासते ग्राह्योपरागमेवसूक्ष्मस्थू
लताभ्यांविभजते भूतसूक्ष्मेति विश्वभेदश्चेतनाचेत
नस्वभावोगवादिर्घटादिश्चद्रष्टव्यः तदनेनवितर्क
विचारानुगतौसमाधीदर्शितौ तथाग्रहणेष्वपींद्रियेः
ष्विति गृह्यंतएभिरर्थाइतिग्रहणानींद्रियाणि एत
देवस्पष्टयति ग्रहणालंबनेतिग्रहणंचालंबनंचतदि
तिग्रहणालंबनंतेनोपरक्तमनुविद्धमात्मीयमंतःक
रणरूपमपिधायग्रहणमिवबहिःकारणमिवापन्न
मिति तदनेनानंदानुगतमुक्त्वास्मितानुगतमाह न

थागृहीतृपुरुषेति अस्मितास्पदं हि गृहीतापुरुषः इतिभावः पुरुषत्वाविशेषादनेनैव मुक्तोपिपुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह तथामुक्तिति उपसंहरन् तत्स्थतदंजनतापदं व्याचष्टे तदेवमिति तेषुगृहीतृग्रहणग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य चित्तसत्त्वस्य यातदंजनता तदाकारता सा समापत्तिः संप्रज्ञातलक्षणोयोग उच्यते तत्र च गृहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोर्थक्रमविरोधान्नादर्त्तव्यः एवं भाष्येपि प्रथमं भूतसूक्ष्मोपन्यासोप्यनादरणीय इति सर्वं रमणीयं सामान्यतः समापत्तिरुक्ता सेयमवांतरभेदाच्चतुर्विधा भवति तद्यथा सवितर्को निर्वितर्को सविचारा निर्विचारा चेति तत्र सवितर्कायाः समापत्तेर्लक्षणमाह तत्रेत्यादि तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रतिपत्तव्या कीदृशी शब्दश्च अर्थश्च ज्ञानं च तेषां विकल्पा वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्विकल्पो यत्र कस्मिन्नभेदमादर्शयति भिन्नेष्वभेदं तेन शब्दार्थज्ञानविकल्पैः संकीर्णा व्यामिश्रेत्यर्थः तद्यथा गौरिति शब्द इति गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः गौरित्यर्थ इति गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पः गौरिति ज्ञानमिति गौरिय

पन्नयोः शब्दार्थयोर्ज्ञानाभेदविकल्पस्तदेवमविनि र्भागेनविभक्तानामपिशब्दार्थज्ञानानांग्रहणंलोक दृष्टंद्रष्टव्यं यद्यविभागेनग्रहणंकुतस्तर्हिविभागइत्य तआह विभज्यमानाश्चान्वयव्यतिरेकाभ्यांपरीक्षकै रन्येशब्दधर्माध्वनिपरिणाममात्रस्यशब्दस्योदात्ता दयोधर्माःअन्येअर्थस्यजडत्वमूर्त्यादयःअन्येप्रका शमूर्त्तिविरहादयोज्ञानस्यधर्माइति तस्मादेतेषां विभक्तःपंथाःस्वरूपभेदोन्नयनमार्गःतत्रविकल्पेग ह्यर्थेसमापन्नस्येति तदनेनयोगिनोपरंप्रत्यक्षमुक्त शेषंसुगमम्॥सूत्रंयोजयितुंप्रथमतस्तावन्निर्वि तर्कांव्याचष्टे यदापुनरिति परिशुद्धिरपनयःशब्द संकेतस्मरणपूर्वैरवल्वागमानुमानेप्रवर्त्तेतेसं केतश्चायंगोरितिशब्दार्थज्ञानानामितरेतराध्या सात्माततश्चागमानुमानज्ञानविकल्पोभवतः॥ तेनतच्छून्यासमाधिप्रज्ञासवितर्कायदापुनरर्थमात्र प्रवणेनचेतसार्थमात्राऽऽहतेनतदभ्यासान्नातरी यकतामुपगतासंकेतस्मृतिस्त्यक्ता तत्यागेनश्रुता नुमानज्ञानविकल्पोतन्मूलौत्यक्तौतदा तच्छून्यायांस माधिप्रज्ञायांस्वरूपमात्रेणावस्थितोर्थस्तत्स्वरूप मात्रतयैवनतुविकल्पितेनाकारेणपरिछिद्यतेसा निर्वितर्कासमापत्तिरिति तद्योगिनांपरंप्रत्यक्षं असद् दारोपगंधस्याप्यभावात् स्यादेतत्परेणप्रत्यक्षेण

नःपरमाणुभ्योव्यावृत्तंरूपमादर्शयति सएषइति प
रमाणुसाध्यायाःक्रियायाअन्याक्रियामधूदकादि
धारणलक्षणातइमेकइति नकेवलमनुभवातअ
पितुव्यवहारतोपितन्निबंधनत्वाल्लोकयात्रायाइ
त्याह तेनेति स्यादेतत् असतिबाधकेअनुभवोअ
वयविनंव्यवस्थापयेत् अस्तिचबाधकंयत्सत्तत्सर्व
मनवयवंयथाविज्ञानं सञ्च गोघटादीतिस्वभावहे
तुःसत्वादिविरुद्धधर्मसंसर्गरहितत्वेनव्याप्तंतद्वि
रुद्धश्चविरुद्धधर्मसंसर्गःसावयवेउपलभ्यमानोव्या
पकविरुद्धोपलब्ध्यासत्वमपिनिवर्त्तयतिअस्तिचावयवि
निनदेशत्वात्तद्देशत्वादवृत्तत्वानावृत्तत्वरक्तत्वचलाचलत्व
लक्षणोविरुद्धधर्मसंसर्गइत्यतआह यस्यपुनरितिअ
यमभिप्रायः अनुभवसिद्धंसत्वंहेतुःक्रियतेयत्कि
लपांशुलपादुकोहालिकोपिप्रतिपद्यते अन्यद्वा अनु
भवसिद्धात् नत्रान्यदसिद्धत्वादहेतुः अनुभवसिद्धं
तुघटादीनांसत्वंमर्थक्रियाकारित्वरूपंनस्थूलादन्यः
त् सोयंहेतुःस्थूलत्वमुपाकुर्वन्नात्मानमेवव्याहन्तिन
नुस्थूलत्वमेवसत्वंअपितुसतोव्यावृत्तिः अस्थौल्यव्या
वृत्तिश्चस्थौल्यं भावयभेदाच्चव्यावृत्त्योभिद्यतेअतः
स्थौल्याभावेपिनसत्वभावइतिः अन्यत्वाद्वस्तुनोव्याव
त्तिभेदादवसायविषयभेदःयस्मिन्नेकात्स्ववसायात्त=
स्यानुभवस्याविकल्पस्यप्रमाणस्यकोविषयइतिनिरू

पयतुभवान् सूक्ष्मपरमाणवोनिरंतरोत्यादावगृहीतप
रमसूक्ष्मतत्वादितिचेत्हंनैतेगंधरससस्पर्शपरमाणुनि
रंतरितानिनिरंतराःतस्मादंतरालाग्रहेएकघनवनप्र
त्ययपरमाण्वालम्बनस्तन्नयंनिकल्पोमिथ्येतित
त्संभवाविकल्पानपारंपर्येणापिवस्तुप्रतिवद्धाइति
कुतस्तद्वसितस्यसत्वस्य नवयवत्वसाधकत्वं त
स्मादविकल्पस्यप्रत्यक्षस्यप्रामाण्यमिच्छतातदनुभू
यमानस्थौल्यस्यैवसत्वमविकल्पावसेयमकामयता
प्यभ्युपेयंतथाचतद्बाधमानंसत्वमासानमेवापवाधे
तपरमसूक्ष्माःपरमाणवोविजातीयपरमाण्वंतरिता
अनुभवविषयादित्यावृतमंगीकरणं नदिदमुक्तं
यस्यपुनरवस्तुकःसप्रत्ययविशेषोनिर्विकल्पविष=
यःसंतुतर्हिसूक्ष्माःपरमाणवोनिर्विकल्पविषयाइ
त्यतआह सूक्ष्मंचकारणमनुपलभ्यविकल्पस्येति
तस्यावयव्यभावाद्धेतोरतद्रूपप्रतिष्ठं मिथ्याज्ञानमि
तिलक्षणेनसर्वमेवप्रायंमिथ्याज्ञानं यत्स्थौल्यालंब
नंयच्चतदधिष्ठानसत्वालंबनमित्यर्थः नन्वेतावता
पिनज्ञानमात्मनिमिथ्याभवति तस्यावयवित्वेनाप्र
काशादित्यतआह प्रायेणेति ननुकिमेतावतापीत्य
तआह तदाचेति सत्वादिज्ञानंचेन्मिथ्यातदासत्वा=
दिहेतुकमनवयवित्वादिज्ञानमपिमिथ्यैवतस्यापि
हिनिर्विकल्पगोचरस्थूलमेवावसेयतयाविषयःसत्व

नुमानाभ्यांतस्मादुपपन्नमस्याःसंकीर्णत्वमिति
निर्विचारमाह यापुनरिति सर्वथासर्वेण नीलपीता
दिनाप्रकारेण सर्वेतदिति सार्वविभक्तिकस्तसिः सर्वै
र्देशकालनिमित्तानुभवैरित्यर्थः तदनेनस्वरूपेणका
लानवच्छेदः परमाणूनामिति दर्शितंनापितदारब्धधर्म
द्वारेणेत्याह शांताअतीताउदितावर्तमानाअव्यपदे
श्याभविष्यंतो धर्मास्तैरनवच्छिन्नेषुअनवच्छिन्ना धर्मैः
परमाणवःकिमसंबद्धाएवतैरित्यतआह सर्वधर्मानु
पातिष्विति कतमेनसंबंधेनधर्मानुपतंतिपरमाण
वइत्यतआह सर्वधर्मात्मकेषुकथंचिद्भेदःकथंचिद
भेदः धर्माणांपरमाणुभ्यइत्यर्थः कस्मात्पुनरियं समाप
त्तिरेतद्विषयेत्यतआह एवंस्वरूपंहीति वस्तुतत्वग्रा
हिणीनान्यत्वेप्रवर्तत इत्यर्थः विषयमभिधायास्याःस्व
रूपमाह प्रज्ञाचेति संकलय्यस्वरूपभेदोपयोगि विष
यमाह तत्रेति उपसंहरति एवमिति उभयोरात्मनश्च
निर्विचारायाश्चेति किंभूतसूक्ष्मएवग्राह्यविषयास
मापत्तिःसमाप्यते नकिंतु सूक्ष्मविषयत्वंचालिंगपर्य
वसानंपार्थिवस्यपरमाणोःसंबंधिनीयागंधतन्मात्रला
सासमापत्तेःसूक्ष्मोविषयःएवमुत्तरत्रापियोऽस्यलिंग
मात्रंमहत्तत्वंतद्धिलयंगच्छतिप्रधान इति अलिंगंप्रधा
नंतद्धिन क्वचिल्लयंगच्छतीत्यर्थः अलिंगपर्यवसानत्वमा
ह नचालिंगात्परमिति चोदयति ननुपुरुषोपिसूक्ष्मोना

लिंगमेवेत्यर्थः परिहरति सत्समिति उपादानतयासौ-
क्ष्म्यमलिंगए ... अन्यत्रेत्यर्थः तत्र पुरुषार्थनिमित्तत्वा-
न्महदहं ... रादेः पुरुषोपिकारणमलिंगवदिति कुतए
वं लक्षणमलिंगस्यैवसौक्ष्म्यमित्याशयवान्पृच्छति किं
त्विति उत्तरमाह लिंगस्येति सत्यंकारणंनतूपादानंयथा
हि प्रधानंमहदादिभावेनपरिणमतेनतथापुरुषःत
द्धेतुरपीत्यर्थ उपसंहरति अतः प्रधानएवसौक्ष्म्यंनिर
तिशयंव्या... एतं चतसृणामपिसमापत्तीनांग्राह्यविष
याणांसंप्रज्ञातत्वमाह ताएवसबीजःसमाधिःएवका
रोभिन्नक्रमः सबीजइत्यस्यानंतरंद्रष्टव्यः ततश्चतस्रः
समापत्तयोग्राह्यविषयास्सबीजतयानियम्यंतेसबी
जता त्वनियता ग्रहीतृग्रहणगोचरायामपिसमाप-
त्तौविवक्षाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते तेन
ग्राह्ये चतस्रःसमापत्तयोग्रहीतृग्रहणयोश्चचत-
स्रइत्यष्टौ तेभवंतिइति निगदव्याख्यातंमाध्यंचतसृषु
समापत्तिषुग्राह्यविषयासुनिर्विचारायाःशोभनत्वमाह
निर्विचारवैशारद्येध्यात्मप्रसादः वैशारद्यपदार्थमाह
अशुद्ध्यावरणमलापेतस्य ... अशुद्धो विरजस्तमसो रूपचयो = बुद्धिःसैव वर
णलक्षणोमलस्तस्मादपेतस्य प्रकाशात्मनःप्रकाश-
स्वभावस्यबुद्धिसत्वस्यअतएवानभिभूतइति स्यादे
तत्ग्राह्यविषयाचेत्समापत्तिःकथमात्मविषयःप्र
सादइत्यतआह भूतार्थविषयइतिनात्मविषयः किं

तुतदाधारइत्यर्थः क्रमाननुरोधीयुगपदित्यर्थः अ
त्रैवपारमर्षींगाथांमुदाहरतितथाचेतिज्ञातलोकप्रकर्षे
णासानंसर्वेषामुपरिपश्यन्दुःखत्रयपरीतान् शोचतो
जनान्जानाति अत्रैवयोगिजनप्रसिद्धान्वर्थसंज्ञाकथ
नेनयोगिसंमतिमाहऋतंभरा तत्रप्रज्ञा सुगमंभाष्यम्
आगमेनेति वेदविहितंश्रवणमुक्तं अनुमानेनेतिमननं
ध्यानंचिंतातत्राभ्यासःपौनःपुन्येनानुष्ठानंतस्मिन्रस
आदरः तदनेननिदिध्यासनमुक्तं स्यादेतत् आगमानु
मानगृहीतार्थविषयभावनाप्रकर्षलब्धजन्मानिर्वि
चाराआगमानुमानविषयमेवगोचरयेत् नखल्वन्यवि
षयानुभवजन्मासंस्कारःशक्तोन्यत्रज्ञानंजनयितुंअ
तिप्रसंगात् तस्मान्निर्विचाराचेदृतंभराआगमानुमा
नयोरपितत्प्रसंगइत्यतआह श्रुतानुमानेत्यादि बुद्धिस
त्वंहि प्रकाशस्वभावंसर्वार्थदर्शनसमर्थमपितमसा
वृत्तंयत्रैवरजसोद्घाट्यते तत्रैवगृण्हातियदाभ्यास
वैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्यो
ततेतदास्यातिपतितसमस्तमानमेयसीम्नःप्रकाशान
त्येसतिकिंनामयन्नगोचरइतिभावःव्याचष्टे श्रुतमाग
मज्ञानंतत्सामान्यविषयंकस्मात् नह्यागमेनशक्योवि
शेषोभिधातुंकुतःयस्मादानंत्याद्व्यभिचाराच्चनविशेषे
णकृतसंकेतःशब्दः यस्मादस्यविशेषेणसहवाच्यवाच
कसंबंधःप्रतीयेतनचवाक्यार्थोपीदृशोविशेषःसंभव

ति अनुमानेपि लिंगलिंगिसंबंधग्रहणाधीनजन्मनि
गतिरेषैवेत्याह तथानुमानमिति यत्राप्राप्तिरित्यत्र
यत्रतत्रशब्दयोः स्थानपरिवर्त्तनेन व्याप्यव्यापकभा
वो गमयितव्यः अतोत्रानुमानेनसामान्येनोपसंहारः
उपसंहरतितस्मादिति अस्तु तर्हि संबंधग्रहानपेक्षं
लोकप्रत्यक्षंनतत्सामान्यविषयमित्यतआह नचा=
स्येत्यादि माभूत्संबंधग्रहाधीनंलोकप्रत्यक्षमिंद्रिया
धीनंतुस्यात् नचेंद्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः न
नु यद्योगमानप्रत्यक्ष गोचरोविशेषस्तर्हिनास्तिप्रमा
णविरहादित्यतआह नचेति नहिप्रमाणंव्यापकंकार
णंवाप्रमेयस्ययेनतन्निवृत्तौनिवर्त्तेत नो खलुकलाव
तः चंद्रस्यपरभागवर्त्तिहरिणसद्भावंप्रतिनसंदिहतेप्रा
माणिकाइत्यर्थइतितस्मात्समाधिप्रज्ञानिग्रोह्यएवेति
अत्रचविवादाध्यासिताःपरमाणवआत्मानश्चप्रा=
तिस्विकविशेषशालिनः द्रव्यत्वेसतिपरस्परंव्यावर्त
मानत्वात् ये द्रव्ये सतिपरस्परंव्यावर्त्तेतेते प्रातिस्वि
कविशेषशालिनः यथाखंडमुंडादय इत्यनुमानेनाग
मेनचऋतंभरप्रज्ञोपदेशपरेणयद्यपिविशेषोनिरू=
प्यतेतदनिरूपणेसंशयःस्यात् न्यायप्राप्तत्वात्तथाप्य
दूरविप्रकर्षेणतत्तत्वंकथंचिद्गोचरयतः श्रुतानुमाने=
नतुसाक्षात्त्वार्थमिवसमुच्चयादिपदानि लिंगसंख्या
योगितया तस्मात्सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यवि

षयेति स्यादेतद्भवतु परमार्थविषयः संप्रज्ञातो यथोक्तो
पायाभ्यासात् अनादिना तु व्युत्थानसंस्कारेण निगूढः
निविडस्तया प्रतिवंधनीया समाधिप्रज्ञा सा वा त्याव
र्तमध्यवर्त्तिप्रदीपपरमाणुरिवेति शंकामपनेतुं सूत्र
मवतारयति समाधिप्रज्ञेति सूत्रं पठति तज्जः संस्कारो
न्यसंस्कारप्रतिबंधी तदिति निर्विचारां समापत्तिं परा
मृशति अन्येति व्युत्थानमाह भूतार्थपक्षपातो हि धिया
स्वभावः तावदेवेयमनवस्थिता भ्राम्यति न यावत्तत्वं
प्रतिलभते तत्प्रतिलंभे तत्र स्थितपदा सती संस्कारबु
द्धिः संस्कारचक्रक्रमेणावर्तमाना नादिमप्यतत्वसंस्का
रबुद्धिक्रमं बाधत एवेति तथा च बाह्या अप्याहुः निरुप
द्रवभूतार्थस्वभावस्य विपर्ययैः न बाधो नादिमत्वेपि
बुद्धेस्तत्पक्षपातः इति स्यादेतत्समाधिप्रज्ञातोस्तु व्यु
त्थानजस्य संस्कारस्य निरोधः समाधिजस्तु संस्काराशंति
प्रायः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकल इति तदव
स्थैव चित्तस्य साधिकारतेति चोदयति कथमसावि
ति परिहरति न त इति चित्तस्य हि कार्यं द्वयं शब्दाद्युप
भोगो विवेकख्यातिश्चेति तत्र क्लेश कर्माशयसहितं
शब्दाद्युपभोगे वर्तते प्रज्ञाप्रभवसंस्कारोन्मूलितनि
खिलक्लेश कर्माशयस्य तु चेतसो वस्तितप्रायाधिकार
भावस्य विवेकख्यातिमात्रमवशिष्यते कार्यं तस्मात्स
माधिसंस्कारा श्चित्तस्य न भोगाधिकारहेतवः प्रत्युत त

सरिपंथिनइतिस्वकार्योद्भोगलक्षणादवसादयति अ
समर्थंकुर्वंतिइत्यर्थः कस्मात्ख्यातिपर्यवसानंहिचित्त
चेष्टितं तावद्भोगायचित्तंचेष्टतेनयावद्विवेकख्याति
मनुभवतिसंजातविवेकख्यातितस्तुक्लेशनिवृत्तौन-
भोगाधिकारइत्यर्थः तदत्रभोगाधिकारप्रशांतिः प्रयो
जनंप्रज्ञासंस्काराणामित्युक्तंभवति किंचेति किंचास्य
भवतिप्रज्ञासंस्कारवच्चित्तंसंस्कारप्रवाहजनकतः
स्यात्तथैवसाधिकारमित्यधिकारापनुत्तयेअन्यदपि
किंचिदपेक्षणीयमस्तीत्यर्थः सूत्रेणोत्तरमाह तस्यापि
निरोधेस सर्वनिरोधान्निर्बीजःसमाधिःपरेणवैराग्ये
णज्ञानप्रसादमात्रलक्षणेनसंस्कारोपजनद्वारातस्या
पिप्रज्ञाकृतस्यसंस्कारस्यनिरोधोनकेवलंप्रज्ञायाइ
त्यपिशब्दार्थःसर्वस्योत्पद्यमानस्यसंस्कारप्रवाहस्यनि
रोधात्कारणाभावे कार्यानुत्पादनात्सोयंनिर्बीजःसमा
धिःसमाधिप्रज्ञाविरोधिनःपरस्माद्वैराग्यादुपजायमानः
स्वकारणद्वारेणनकेवलंसमाधिप्रज्ञाविरोधीप्रज्ञाकृ
तानामप्यसौसंस्काराणांपरिपंथीभवति ननुवैराग्यजं
विज्ञानंसत्विज्ञानंप्रज्ञामात्रंबाधतांसंस्कारंत्वविज्ञा
नरूपंकथंबाधतेदृष्टाहिजाग्रतोपिस्वप्नदृष्टार्थस्मृति
रित्याशयवान्पृच्छतिकस्मादितिउत्तरंनिरोधजइतिनि
रुध्यतेनेनप्रज्ञेतिनिरोधःपरंवैराग्यं ततोजातोनिरोध
जःसंस्कारःसंस्कारादेवदीर्घकालनैरंतर्यसत्कारासे

वितपरवैराग्यजन्मनःप्रज्ञासंस्कारवाधोनतुविज्ञाना
दित्यर्थःस्यादेतन्निरोधजसंस्कारसद्भावेकिंप्रमाणंसहि
प्रत्यक्षेणवानुभूयेतस्मृत्यावाकार्येणानुमीयेतनचस
र्ववृत्तिनिरोधेप्रत्यक्षमस्तियोगिनःनापिस्मृतिःतस्य
वृत्तिमात्रनिरोधतयास्मृतिजनकत्वासंभवादित्यतः
आहनिरोधेतिनिरोधेस्थितिःचित्तस्यनिरुद्धावस्थेत्य
र्थःतस्याःकालक्रमोमुहूर्तार्द्धयामयामाहोरात्रादिस्तद
नुभवेनएतदुक्तंभवतिवैराग्याभ्यासप्रकर्षानुरोधीनि
रोधप्रकर्षोमुहूर्तार्द्धयामादिव्यापितयानुभूयतेयोगि
नानचवैराग्यक्षणाःक्रमनियततयापरस्परमसंभवं
तस्तत्तत्कालव्यापितयासातिशयंनिरोधंकर्तुमीशत
इतितत्तद्वैराग्यलक्षणप्रचयजन्यःस्थायीप्रचयएषि
तव्यइतिभावःननु छिद्यंतांप्रज्ञासंस्काराःनिरोधसं
स्कारस्तुकुतःसमुछिद्यतेअनुच्छेदेवा साधिकारत्वमे
वेत्यतआह व्युत्थानेति व्युत्थानंचतस्यनिरोधसमाधि
श्चसंप्रज्ञातःतत्संभवाःसंस्काराःकैवल्यभागीयानिरो
धजाःसंस्काराइत्यर्थः व्युत्थानप्रज्ञासंस्काराश्चित्तेप्र-
लीनाइतिभवतिचित्तं व्युत्थानप्रज्ञासंस्कारवत्निरो
धसंस्कारास्तुप्रमुदितएवास्तेचित्तेनिरोधसंस्कारेस
त्यपिचित्तमनधिकारवत्पुरुषार्थजनकंहिचित्तं
साधिकारंशब्दाद्युपभोगविवेकख्यातीचतथापुरु
षार्थेसंस्कारशेषतायांतुनवुद्धेःप्रतिसंवेदीपुरुषइ

तिनासोपुरुषार्थः विदेहप्रकृतिलयानांननिरोधभा=
गितयासाधिकारंचित्तंअपितुक्लेशवासिततयेत्याशय
वानाह यस्मादिति शेषंसुगमं योगस्योद्देशनिर्देशौत
दर्थंवृत्तिलक्षणं योगोपायाःप्रभेदाश्चपादेस्मिन्नुपव=
र्णिताःश्रीवाचस्पतिमिश्रविरचितायांपातंजलभाष्य=
व्याख्यायांप्रथमःसमाधिपादःसमाप्तः१॥ ॥ननुप्रथ=
म पादेनैवसोपायःसावांतरप्रभेदःसफलोयोगउक्त=
स्ततकिमपरमवशिष्यतेयदर्थंद्वितीयःपादःप्रारभ्यते
त्यतआहउद्दिष्टइति अभ्यासवैराग्येद्वियोगोपायौप्रथ
मेपादेउक्तौनचतौव्युत्थितस्यद्रागित्येवसंभवतइ
तिद्वितीयपादेोपदेक्ष्यमाणानुपायानपेक्षतेसत्त्वशुध्यर्थंनतो
हिविशुद्धसत्वःकृतरक्षासंविधानोभ्यासवैराग्येप्रत्य
हंभावयति समाहितत्वमविक्षिप्तत्वं कथंव्युत्थानचि
त्तोप्युपदेक्ष्यमाणैरुपायैर्युक्तःसन्योगीस्यादित्यर्थः
तत्रवक्ष्यमाणेषुनियमेषुत्र्याकृष्यप्राथमिकंप्रत्युपयु
क्ततरत्वयाप्रथमतःक्रियायोगमुपदिशतिसूत्रकारः
तपःस्वाध्यायेत्यादिक्रियैवयोगःक्रियायोगोयोगसाध
नत्वात् अतएवविष्णुपुराणेखांडिक्यकेशिध्वजसंवा
देयोगमुक्प्रथमंयोगीयुंजमानोभिधीयतइत्युपक्र=
म्यतपःस्वाध्यायादयोदर्शिताःव्यतिरेकमुखेनतपस
उपायत्वमाहनातपस्विनइति तपसोवांतरव्यापारमु
पायतोपयेोगिनंदर्शयति अनादीति अनादिभ्यांकर्म

क्लेषवासनाभ्यांचित्रा अतएवप्रत्युपस्थितमुपनतवि
षयजालंयस्यासातथोक्ताअशुद्धोरजस्तमःसमुद्रेको
नांतरेणतपःसंभेदनापद्यतेसांद्रस्यानितांतविरलता
संभेदःननूपादीयमाननपितपोधातुवैषम्यहेतुतया
योगप्रतिपक्षइतिकथंतदुपायइतिअतआहतच्चे
तितावन्मात्रमेवतपश्चारणीयंनयावताधातुवैषम्य
मापद्यतइत्यर्थःप्रणवादयःपुरुषसूक्तरुद्रमंडलब्रा॰
ह्मणादयोवैदिकाःपौराणिकाश्च ब्रह्मपारादयःब्रह्मपा
रायणादयइत्यपिपाठःपरगुरुर्भगवानीश्वरस्तस्मिन्य
त्रेदमुक्तंकामतोकामतोवापियत्करोमिशुभाशुभं त
त्सर्वंत्वयिसंन्यस्तंत्वत्प्रयुक्तःकरोम्यहमिति तत्फलसं
न्यासोवाफलानभिसंधानेनकार्यकरणंयत्रेदमुक्तं क
र्मण्येवाधिकारस्तेमाफलेषुकदाचन॥माकर्मफलहे

लवहिरोधिग्रस्तासत्वपुरुषान्यताख्यातिरुदेतुमेवनो-
सहतेप्रागेवतद्दंध्यभावंकर्त्तुंप्रविरलीकृतेषुतु क्लेषेषु
दुर्बलेषुतद्विरोधिन्यपिवैराग्याभ्यासाभ्यामुपजायतेउ
पजातान्चतैरपरामृष्टाअनभिभूतानैवयावत्परामृश्यते
सत्वपुरुषान्यतामात्रख्यातिःसूक्ष्माप्रज्ञातींद्रियत-
यासूक्ष्मोस्याविषयइतिसूक्ष्माप्रज्ञाप्रतिप्रसवायप्र
विलयायकल्पिष्यंतेकुतःसमाप्तोधिकारःकार्यारंभ
णंगुणानांयया हेतुभूतयासातथोक्तेति एछति अथे
तिअविद्येतिसूत्रेणपरिहारःअविद्याः क्लेषाः व्याचष्टे
पंचविपर्ययाइतिअविद्यातावद्विपर्ययएवअस्मि
तादयोप्यविद्योपादानास्तदविनिर्भागवर्त्तिनइतिवि
पर्ययाःततश्चाविद्यासमुच्छेदेतेषामपिसमुच्छेदोयुक्त
इतिभावः तेषामुच्छेत्तव्यताहेतुंसंसारकारणत्वमाह ते
स्पंदमानाःसमुदाचरंतोगुणानामधिकारंद्रढयंति व
लवंतंकुर्वंतिअतएवपरिणाममवस्थापयंति अव्य
क्तमहदहंकारपरंपरयाहिकार्यकारणस्रोतउन्नम
यतिउद्भावयंतियदर्थंसर्वमेतत्कुर्वंति तदर्शयतिपर
स्परेतिकर्मणांविपाकोजात्यायुर्भोगलक्षणःपुरुषार्थः
तममीक्लेशाअभिनिर्हरंति निष्पादयंति किंप्रत्येकं
नेत्याह परस्परानुग्रहेतिकर्मभिःक्लेषाः क्लेषैश्च क
र्माणीतिद्रेयानांक्लेषाणामविद्यामूलत्वंदर्शयति अ
विद्याक्षेत्रमुत्तरेषांप्रसुप्ततनुविच्छिन्नोदाराणांतत्र-

कान्नसुप्तिरिति स्वोचितामर्थक्रियामकुर्वतां क्लेशानां स
द्भावेन प्रमाणमस्तीत्यभिप्रायः कुतः उक्तं स्वेतसीति
मानामार्थक्रियाकार्षुः क्लेशाः विदेहप्रकृतिलयानां बीज
भावमापन्नास्तु ते शक्तिमात्रेण संति क्षीरद्रवदधिन हि वि
वेकख्यातेरन्यदस्ति कारणं तद्वंध्यतायां अतो विदेहप्र
कृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न याव
त्तदवधिकालं प्राप्नुवंति न प्राप्तौ तु पुनरावृत्ताः संतः क्ले
शास्तेषु तेषु विषयेषु संमुखीभवंति शक्तिमात्रेण प्र
तिष्ठा येषां ते तथोक्ताः तदनेनोत्पत्तिशक्तिरुक्ता बीज
भावोपगम इति च कार्यशक्तिरिति ननु विवेकख्याति
मतोपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह प्रसंख्यान
वत इति चरमदेहेन तस्य देहांतरसुप्तस्य ते यदपे
क्षयास्य देहः पूर्व इत्यर्थः नान्यत्र विदेहादिष्विस्यर्थः
ननु सतो नान्यंत विनाश इति किमिति तदीये गर्द्धि
लेन विषयसंमुखीभावेन क्लेशाः प्रबुध्यंते इत्यत आह
सतामिति संतु क्लेशाः दग्धस्तेषां प्रसंख्याग्निना बीज
भाव इत्यर्थः क्लेश प्रतिपक्षः क्रियायोगस्तस्य भावनम
नुष्ठानं तेनोपहतास्तनवः अथवा सम्यक्ज्ञानमवि
द्यायाः प्रतिपक्षः भेददर्शनमस्मितायामाध्यस्थ्यं राग
द्वेषयोरनुबंधबुद्धिनिवृत्तिरभिनिवेशस्येति विछिन्न
तमाह तथेति क्लेशानामन्यतमेन समुदाचरत्ताभिभ
वादुग्ग्रस्यं तद्विषयसेवया वा विछिद्य विछिद्य तेन तेना

त्सनासमुदाचरंतिआविर्भवंति बीजीकरणाद्युपयोगेन वाभिभावकदौर्बल्येनवेतिवीप्सयाविच्छेदसमुदाचारयोःपौनःपुन्यंदर्शयतायथोक्तान् प्रसुप्तादीनुक्त्वा रागेणवासमुदाचरतीविजानीयःक्रोधोभिभूयतसजातीयेनवाविषयोन्तरवर्त्तिना रागेणैवविषयांतरवर्त्तीरागोभिभूयतइत्याह रागेतिभविष्यद्वृत्तेत्ययोगनिःयथायोगंवेदितव्येत्याह सहीति भविष्यद्वृत्तिक्लेशमात्रपरामर्शिसर्वनामनन्वेत्ररागपरामर्शितस्यविच्छिन्नत्वादेवेतिउदारमाह विषयइति ननूदारएवपुरुषान्क्लिश्नातीतिभवतुक्लेशोन्येत्वक्लिश्नंतःकथंक्लेशाइत्यतआह सर्वएवेतेइति क्लेशविषयत्वंक्लेशपदवाच्यत्वंनातिक्रामंतिउदारतामापद्यमानाअतएवतेपिहेयाइतिभावः क्लेशत्वेनैकतामन्यमानश्चोदयति कस्तर्हीति क्लेशत्वेनसमानत्वेपियथोक्तावस्थाभेदाद्विशेषइतिपरिहरति उच्यते सत्यमितिस्यादेतदविद्यातोभवंतुक्लेशाःतथाप्यविद्यानिवृत्तौकस्मान्निवर्ततेनखलुपटःकुविंदनिवृत्तौ निवर्ततेइत्यतआह सर्वएवेति भेदाइवभेदास्तदविनिर्भागवर्तिनइतियावत् कस्मात् उत्तरं सर्वेष्विति वदेवस्फुटयति यदिति आकार्यते समारोप्यते शेषंसुगमं प्रसुप्तस्तनुलीनानांतत्त्ववस्थाश्चयोगिनां विच्छिन्नोदाररूपाश्च क्लेशाविषयसंगिनामितिसंग्रहः अनित्याशुचिरविद्या अनित्यत्वोपयोगिविशेषणंकार्यइति केचित् किलभूतानित्यत्वेनाभिमन्य

नानास्तद्रूपमभीप्सवस्तान्येवोपासते एवधूमादिमा
र्गोनुपासते चंद्रसूर्यतारकाद्युलोकान्नित्यानभिमन्यमा
नास्तत्प्राप्तये एवंदिवौकसोदेवानमृतानभिमन्यमानास्त
द्रूपमभीप्सवस्तान्येवोपासते आम्नायते हि अपामसोम
ममृताअभूमेतिसेयमनित्येषुनित्यख्यातिरविद्या तथा
अशुचौपरमबीभत्सेकाये धीक्तएवकायबीभत्सता=
यांवैयाशिकीगाथांपठति स्थानादिति मातुरुदरंमूत्राद्यु
पहतस्थानंपित्रोर्लोहितरेतसीबीजं असितपीताहाररु=
सादिभाव उपष्टंभस्तेनशरीरंधार्यते निस्यंदःप्रस्वेदः निध=
नंचश्रोत्रियशरीरमप्यपवित्रयति तत्स्पर्शेस्नानविधा=
नात्ननुयदिशरीरमशुचिकृतंतर्हिमृज्जलादिक्षालनेने
त्यतआह आधेयशौचत्वादिति स्वभावेनाशुचेरपिशरी
रस्यशौचमाधेयंसुगंधितेवकामिनीनामंगरागादिति
अर्द्धोक्तंपूरयति इत्युक्तेभ्योहेतुभ्योऽशुचौशरीरइतिशु
चिख्यातिमाह नवेति हावःशृंगारजालीलाकस्यस्त्रीका
यस्यपरमबीभत्सस्यकेनमंदतमसा दृश्येनशशांकलेखा
दिनासंबंधःएतेनाशुचौस्त्रीकायेशुचिख्यातिप्रदर्शनेन
अपुण्ये हिंसादौ संसारमोचकादीनांपुण्यप्रत्ययः एव
मर्जनरक्षणादिदुःखबहुलतयानर्थे धनादावर्थप्रत्ययो
व्याख्यातः सर्वेषांजुगुप्सितत्वेनाशुचित्वात् तथादुःख
इतिसुगमं तथाअनात्मनीतिसुगमं तथैतदत्रोक्तंपंच
शिखेन व्यक्तंचेतनंपुत्रदारपश्वादिअव्यक्तमचेतनं

शय्यासनाशनादिसमर्थैःप्रतिबद्धोमूढः चत्वारिपदानिस्या
नान्यस्यादितिचतुष्पदानन्वन्यात्र्प्रपिदिङ्मोहालातच
क्रादिविषयात्र्प्रनंतपदात्र्प्रविद्यालक्षिमुच्यतेचतुष्पदे
त्यतत्र्प्राह संतुनामान्यात्र्प्रप्यविद्याःसंसारबीजंचतुष्प
देवेति नन्वविद्येतिनञ्समासःपूर्वपदार्थप्रधानोवास्या
द्यथामक्षिकमिति उत्तरपदार्थप्रधानोवायथात्र्प्रराजपु
रुषइति अन्यपदार्थप्रधानोवा यथामक्षिकोदेशइति
तत्रपूर्वपदार्थप्रधानत्वेविद्यायाःप्रसज्यप्रतिषेधोगम्ये
त नचास्य क्लेशादिकारणत्वंउत्तरपदार्थप्रधानत्वेवावि
द्येवकस्यचिदभावेनविशिष्टागम्येत साचक्लेशादिपरि
पंथिनीनतुतद्बीजंनहिप्रधानोपघातीप्रधानगुणोयुक्त
स्तद्धुपघातायगुणेत्वन्याय्यकल्पनात्तस्माद्विद्यास्वरू
पानुपघातायनञोन्यथाकरणमध्याहारोवानिषेधस्ये
ति अन्यपदार्थप्राधान्येत्वविद्यमानविद्याबुद्धिर्वक्त
व्या नचासौविद्यायात्र्प्रभावमात्रेणक्लेशादिबीजंविवे
कख्यातिपूर्वकनिरोधसंपन्नायात्र्प्रपितथात्वप्रसंगा
त् नसात्सर्वथैवाविद्यायानक्लेशादिमूलतेत्यतत्र्प्रा
ह तस्याश्चेतिवस्तुनोभावोवस्तुसत्त्वंवस्तुत्वमि
तियावत् तदनेननप्रसज्यप्रतिषेधः नापिविद्यैवा
विद्यानापितदभावविशिष्टाबुद्धिरपितुविद्याविरु
द्धंविपर्ययज्ञानमविद्येत्युक्तंलोकाधीनावधारणो
हिशब्दार्थसंबंधःलोकेचोत्तरपदार्थप्रधानस्यापि

नञउत्तरपदाभिधेयोपमर्दकस्यतल्लक्षिततद्विरुद्धप
रतयातत्रतत्रोपलब्धेरिहापितद्विरुद्धवृत्तिरितिभावः
दृष्टांतंविभजतेयथानामित्रइति नमित्राभावःनापि=
मित्रमात्रमित्यस्यानंतरंवक्तव्यंकिंतुतद्विरुद्धःसपत्न
इतिवक्तव्यं तथागोष्पदमिति नगोष्पदाभावोनगोष्प
दमात्रं किंतुदेशएवविपुलोगोष्पदविरुद्धस्ताभ्याम=
भावगोष्पदाभ्यामन्यद्वस्त्वर्थाद्वस्त्वंतरं दार्ष्टांतिकेयोज
यतिएवमितिअविद्यामुक्त्वातस्याःकार्यमस्मितारागा
दिवर्षिष्टामाह दृग्दर्शनेत्यादिसूत्रं दृक्च दर्शनंचतेए
वशक्तीतयोरात्मानात्मनोरनात्मन्यात्मज्ञानलक्षणाऽ
विद्याआपादितायाएकार्थतेवनतुपरमार्थतएकात्मा
तासाअस्मितादृग्दर्शनयोरितिवक्तव्येतयोर्भोक्तृभोग्य
योर्योग्यतालक्षणंसंबंधंदर्शयितुंशक्तिग्रहणंसूत्रंविवृ
णोतिपुरुषइति नन्वनयोरभेदप्रतीतेरभेदएवकस्मा=
न्नभवति कुतश्चैकत्वंक्लिश्नातिपुरुषमित्यतआह भो=
क्तृभोग्येति भोग्यशक्तिर्बुद्धिर्भोक्तृशक्तिःपुरुषस्तयोर
त्यंतविभक्तयोःकुतोत्यंतविभक्तत्वमित्यतआह अत्यंता
संकीर्णयोरपरिणामित्वादिधर्मकःपुरुषःपरिणामित्वा
दिधर्मिकाबुद्धिरित्यसंकीर्णता तदनेनप्रतीयमानोप्यभे
दोनपारमार्थिकइत्युक्तं अविभागेति क्लेशत्वमुक्तं अ
न्वयंदर्शयित्वाव्यतिरेकमाह स्वरूपेति प्रतिलंभोविवे
कख्यातिःपरस्याप्येतत्संमतमित्याह तदुक्तं पंचशि

त्वेन बुद्धितद्‌इति अकारःस्वरूपंसदाविशुद्धिःशीलमौ-
दासीन्यं विद्याचैतन्यं बुद्धिरविशुद्धा अनुदासीनाज
डाचेति तत्रात्मबुद्धिरविद्या मोहःपूर्वोऽविद्याजनितः
संस्कारः तमोवाविद्यायास्तामसत्वादिति विवेकदर्श
नेरागादीनांचितिकृत्ते रविद्यापादितास्मितारागादी-
नांनिदानमित्यस्मितानंतरं रागादीनलक्षयति सुखा
नुशयीरागः अनभिज्ञस्यस्मृतेरभावात्सुखाभिज्ञस्येत्यु
क्तं स्मर्यमाणेसुखेरागःसुखानुस्मृतिपूर्वकः अनुभूय
मानेतुसुखेनानुस्मृतिमपेक्षते तत्साधनेतुस्मर्यमाणे दृ
श्यमानेवा सुखानुस्मृतिपूर्वएवरागः दृश्यमानमपि-
हि सुखसाधनं तज्जातीयस्यसुखहेतुतांस्मृत्वातज्जा-
तीयतया चास्यसुखहेतुतामनुमायेत्यलि अनुशयीति
पदार्थमाह यइति दुःखानुशयीद्वेषः दुःखाभिज्ञस्येति
पूर्ववद्व्याख्येयं अनुशयिपदार्थमाह यःप्रतिघरति प्र-
तिहंतीतिप्रतिघः एतदेवपर्यायैर्विवृणोति मन्युरिति
स्वरसःअभिनिवेशपदार्थं व्याचष्टे सर्वस्यप्राणिनइति
इयमाशीरात्मनिप्रार्थना मानभूवं माऽभावीभूयासम्
भूयासंजीव्यासमिति नचाननुभूतमरणधर्मकस्य अ
ननुभूतोमरणधर्मोयेनजंतुनानतस्यैवंभवत्यात्माशी
रभिनिवेशोमरणभयं प्रसंगतोजन्मांतरं प्रत्याचक्षाणं
नास्तिकंनिराकरोति एतयाचेति प्रत्युदितस्यशरीरस्य
ध्रियमाणत्वात् पूर्वजन्मानुभवप्रतीयते निकायविशि-

ष्टभिरपूर्वोभिर्देहेंद्रियबुद्धिवेदनाभिरभिसंबंधो जन्मतः
सानुभवःप्राप्तिःसाप्रतीयतेकथमित्यतआह सचायम=
भिनिवेशःअर्द्धोक्तावेवास्यक्लेशत्वमाह क्लेशइति अय
महितकर्मादिनाजंतून्क्लिश्नाति दुःखाकरोतीतिक्लेशः
वस्तुमुपक्रांतंपरिसमापयति स्वरसवाहीतिस्वभावेन
वासनारूपेणवहनशीलोनपुनरागंतुकः कृमेरपिजात
मात्रस्यदुःखबहुलस्यनिकृष्टतमस्यैतन्यस्य अनागंतु=
कत्वेहेतुमाह प्रत्यक्षानुमानागमैःप्रत्युदितेजन्मन्यासंभा
वितोसंपादितोमरणत्रासउच्छेददृष्ट्यात्मकः पूर्वजन्मा
नुभूतंमरणदुःखमनुमापयति अयमभिसंधिर्जातमात्र
एवहि बालकौमारकवस्तुदर्शनात् वेपमानःकंपविशे
षादनुमितमरणप्रत्यासत्तिस्ततोबिभ्यदुपलभ्यते दुःखा
त् दुःखहेतोश्चभयंदृष्टंनचास्मिन्जन्मन्यनेनमरणम=
नुभूतमनुमितंश्रुतंवा प्रागेवास्यदुःखत्वं तद्धेतुत्वंवाव
गम्येत तस्मात्तस्य तथाभूतस्यस्मृतिःपरिशिष्यते नचेयं
संस्कारादृतेनचायंसंस्कारोनुभवंबिना नचास्मिन्जन्म=
न्यनुभवइति प्राग्भवीयःपरिशिष्यतइत्यासीत्पूर्वजन्म
संबंधइति तथापदंयथापदमाकांक्षतीत्यर्थःप्राग्नेयथाप
देसतियादृशोवाक्यार्थोभवतितादृशंदर्शयतियथाच्चा
यमिति अत्यंतमूढेषुमंदतमस्यैतन्येषुविद्वत्तांदर्शयति वि
ज्ञातपूर्वापरांतस्यांतःकोटिःपुरुषस्यहिपूर्वाकोटिःसं
सारउत्तराकैवल्यंसैवविद्याताश्रुतानुमानाभ्यांयेनस न

थोक्तःसोयंमरणत्रासआकृमेएषविदुषोरूढःप्रसिद्धइ=
ति नन्वविदुषोभवतुमरणत्रासोविदुषस्तुनसंभवति
विद्ययोन्मूलितत्वात् अनुन्मूलनेवामरणत्रासस्यस्या
दत्यंतसत्वमित्याशयवान्पृच्छति कस्मादितिउत्तरंसमा
नाहीतिनसंप्रज्ञातवान् विद्वानपितुश्रुतानुमितविवे=
कइतिभावः तदेवंक्लेशालक्षितास्तेषांचहेयानांप्रसुप्त
तनुविच्छिन्नोदाररूपतया चतस्रोवस्थादर्शिताःकस्मा
त्पुनःपंचमीक्लेशावस्थादग्धबीजभावतयासूक्ष्मानसू
त्रकारेणकथितेत्यतआह ते सूक्ष्माःयत्किलपुरुषप्रय
त्नगोचरस्तदुपदिश्यते नचसूक्ष्मावस्थाहानंप्रयत्नगो
चरःकिंतु प्रसवविरुद्धःप्रतिप्रसवःप्रलयइत्यर्थःप्रतिप्र
सवेनकार्यस्यचित्तस्यास्मितालक्षणकारणभावाप्त्या=
हातव्येति व्याचष्टेतइतिसुगमं अथक्रियायोगतनूकृता
नांक्लेशानांकिंविषयःपुरुषप्रयत्नाहानमित्यतआह
स्थितानांतुबीजभावोपगतानामिति वंध्येभ्योव्यवच्छि
त्ति सूत्रंपठति ध्यानेति व्याचष्टे क्लेशानामिति क्रियायो
गतनूकृताअपिहिप्रतिप्रसवहेतुभावेनकार्यतः स्व
रूपतश्चशक्याउच्छेत्तुमिति स्थूलाउक्ताःपुरुषप्रयत्न=
स्यप्रसंख्यानगोचरस्यावधिमाह यावदिति सूक्ष्मीकृ=
ताइतिविवृणोति दग्धेति अत्रैव दृष्टांतमाह यथाच व
स्त्राणामिति यत्नेनतक्षालनादिनोपायेनक्षारसंयोगादिना
स्थूलसूक्ष्मतामात्रतयादृष्टांतदार्ष्टांतिकयोःसाम्यंनपुनः

प्रयत्नापनेयतयाप्रतिप्रसवहेयेषु नदसंभवात् स्वल्पः प्र
तिपक्षउच्छेदहेतुर्योसंतास्तथोक्ताः महान्प्रतिपक्षउच्छे
दहेतुर्योसंतास्तथोक्ताः प्रतिप्रसवस्याधस्तात् प्रसंख्यान
मित्यवरतया स्वल्पत्वमुक्तं स्यादेतज्जात्यायुर्भोगहेतवः
क्लिश्नंतः क्लेशाः कर्माशयश्चतथा नत्वविद्यादयस्तत्कथमवि
द्यादयः क्लेशादय तत्राह क्लेशमूलःकर्माशयइत्या
दिक्लेशोमूलंयस्योत्पादेचकार्यकारणेच सतथोक्तः एतदुक्तं
भवति अविद्यादिमूलः कर्माशयोजात्यायुर्भोगहेतु
रिति अविद्यादयापि तद्धेतवोतः क्लेशाइतिव्याचष्टे तत्रे
ति आशेरतेसांसारिकाःपुरुषाअस्मिन्नित्याशयःकर्मणा
माशयोधर्माधर्मौ कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतु
र्धर्मोभवति एवंलोभात् परद्रव्यापहारादावधर्मः मो
हादधर्मेहिंसादौधर्मबुद्धेःप्रवर्त्तमानस्याधर्मएवनत्वस्ति
मोहजोधर्मोस्तिक्रोधजोधर्मः तद्यथाध्रुवस्यजनकावमा
नजन्मनःक्रोधात्तज्जिगीषयादितेन कर्माशयेनपुण्येनांत
रिक्षलोकवासिनामुपरिस्थानं अधर्मस्तु क्रोधजोब्रह्मवधा
दिजन्माप्रसिद्धएवभूतानां तस्यद्वैविध्यमाह सदृष्टजन्मेत्
ति दृष्टजन्मवेदनीयमाह तीव्रसंवेगेनेति यथासंख्येन
दृष्टांतावाह यथानंदीश्वरइति तत्र नारकाणामितियेन
कर्माशयेन कुंभीपाकादयोनरकभेदाः प्राप्यंते तत्कारिणो
नारकास्तेषांनास्तिदृष्टजन्मवेदनीयः कर्माशयोनहिम
नुष्यशरीरेण तत्परिणामभेदेनवासा तादृशीवत्सरसह

गप्रथमाविचारणाद्द्वितीयातुकर्मानेकत्वंध्रुवंकृत्वाज न्मैकत्वानेकत्वगोचरात्तदेवंचत्वारोविकल्पाःतत्रप्रथ मंविकल्पमपाकरोति नतावदेकंकर्मैकस्यजन्मनःका रणंइष्यते कस्मादितिउत्तरंअनादिकाले एकैकजन्म प्रचितस्यअतएवासंख्येयस्यएकैकजन्मक्षपितादेकै कस्मात्कर्मणोवशिष्टस्यकर्मणःसांप्रतिकस्यचफलक्र मानियमाद्नाश्वासोलोकस्यप्रसक्तःसचानिष्टइति एतदुक्तं भवतिकर्मक्षयस्यविरलत्वात् तदुत्पत्तिबाहु ल्याच्चान्योन्यसंपीडिताश्चकर्माशयानिरंतरोत्पत्तयो निरुच्छ्वासाःस्वविपाकंप्रतीति नफलक्रमःशक्योवधा रयितुंप्रेक्षावतेस्यनाश्वासःपुण्यानुष्ठानंप्रतिप्रसक्तइ तिद्वितीयंविकल्पंनिराकरोति नचैकंकर्मानेकस्यज न्मनःकारणंइष्यतिकस्मादितिउत्तरंअनेकस्मिन्जन्म न्याहितमेकैकमेवकर्मानेकस्यजन्मलक्षणस्यविपा कस्यनिमित्तमित्यवशिष्टस्यविपाककालाभावःप्रसक्तः सचाप्यनिष्टइति कर्मवैफल्येनतदननुष्ठानप्रसंगात् देकजन्मसमुच्छेद्यकर्मण्येकस्मिन्फलक्रमानियमाद नाश्वासस्तदाकैवकथाबहुजन्मसमुच्छेद्याकर्मण्येक= स्मिन्तत्रावसराभावात् विपाककालाभावएवसांप्र= तिकस्येतिभावः तृतीयंविकल्पंनिराकरोति नचानेकं कर्मानेकस्य जन्मनः ॥ कारणमत्रहेतुमाह तदनेक जन्मयुगपन्नसंभवत्ययोगिनइतिक्रमेणवाच्यंपदि

छिनत्ति दृष्टेति नंदीश्वरस्य खल्वष्टवर्षोवछिन्नायुषोम
नुष्यजन्मनस्तीव्रसंवेगाधिमात्रोपायजन्मापुण्यभेदआ
युर्भोगहेतुत्वात् द्विविपाकोनहुषस्यतुपाप्मिप्रहा वि
रोधिनागस्त्यस्येंद्रपदप्राप्तिहेतुनैवकर्मणाऽऽयुषोवि
हितत्वादेःपुण्यभेदोभोगमात्र हेतुः ननुयथैकभवि
कःकर्माशयस्तथाकिंक्लेशवासनाभोगानुकूलाश्चक
र्मविपाकानुभववासनास्तथाचमनुष्यस्तिर्यग्योनिसं
पन्नोनतज्जातीयोचित्तंभुंजीतेत्यतआह क्लेशेति संमूर्छि
तमेकलोलीभावमापन्नं धर्माधर्माभ्यांव्यवच्छेत्तुवास
नायाःस्वरूपमाह येसंस्कारादृति औत्सर्गिकमेकभवि
कत्वंकचिदपवदितुंभूमिकामारचयति यस्त्वसाविति
तु शब्देनवासनातोव्यवछिनत्ति दृष्टजन्मवेदनीयस्य
नियतविपाकस्यैवायमेकभविकत्वनियमः न त्वदृष्ट
जन्मवेदनीयस्य किंभूतस्यानियतविपाकस्येतिहेतुंपृ
छति कस्मादिति हेतुमाह योह्येति एकांतावदृतिमाह
कृतस्येतिद्वितीयामाह प्रधानेति तृतीयामाह नियतेति
तत्रप्रथमांविभजते तत्रकृतस्येति सन्यासिकर्मभ्यो शु
क्लाकृष्णेभ्योन्यानित्रीण्येवकर्माणिकृष्णशुक्लकृष्णशुक्ला
नितदिहतपःस्वाध्यायादिसाध्यःशुक्लकर्माशयउदित
एवादत्तफलस्यकृष्णस्यनाशकः अविशेषाच्च शबलस्या
पि कृष्णभागयोगादितिमंतव्यं तत्रैवभगवानाम्नायमु
दाहरतियत्रेदमितिद्वेद्वेहवैकर्मणीकृष्णकृष्णशुक्लेआ

पहंतीतिसंबंधः वीप्सयाभूयिष्ठतासूचिता कस्येत्यतआ
हपा पकस्यपुंसः कोसावपहंतीत्यतआह एकोराशिः
पुण्य सम्हस्यसमूहिसाध्यत्वात् तदनेनशुक्लः कर्माशय
स्तृतीयउक्तः एतदुक्तंभवति ईदृशोनामायंपरपीडादि
रहितसाधनसाध्यः शुक्लःकर्माशयोयदेकोपिसन् कस्मा
न्कृष्णशुक्लाश्चात्यंतविरोधिनः कर्माशयान्भूयसोप्य
पहंति तत्तस्मादिकृत्स्वेतिछांदसत्वादात्मनेपदं शेषंसु
गमं अत्रच शुक्लकर्मोपादेयस्यैवसकोपिमहिमायतद
तरेषामभावोनतुस्वाध्यायादिजन्मनोदुःखात् नहि दु
खमात्रविरोध्यधर्मोपितुस्वकार्यदुःखविरोधीनचस्वा
ध्यायादिजन्यदुःखंतस्यकार्यं तत्कार्यत्वेंस्वाध्यायादि
विधानानर्थक्यात्तद्वलादेवतदुत्पत्तेः अनुत्पत्तौवाकुं
भीपाकाद्यपिविधीयेत अविधाने तदनुत्पत्तेरितिसर्वं
चतुरस्रं द्वितीयांगतिं विभजते प्रधानेकर्मणिज्योतिष्टो
मादिके तदंगस्यपशुहिंसादेरावापगमनं द्वेखलुहिंसा
देःकार्येप्रधानां त्वेनविधानात्तदुपकारःनहिंस्यात्सर्वा
भूतानीति हिंसायानिषिद्धत्वादनर्थश्च तत्रप्रधानांगत्वे
नानुष्ठानादप्रधानत्वेनत्यतोनद्रागित्येवप्रधाननिरपेक्षा
सतीस्वफलमनर्थंप्रसोतुमर्हति किंत्वारब्धविपाकेप्र
धाने साहाय्यकमाचरंतीव्यवतिष्ठते प्रधानसाहाय्यकमा
चरंत्याश्चस्वकार्ये वीजमात्रतयावस्थानंप्रधाने कर्मण्या
वापगमनं भवेदुक्तं पंचशिखेनस्वल्पः संकरोज्योतिः

ष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनानर्थ
हेतुना पूर्वेण सपरिहारः शक्योहि कियताप्रायश्चित्तेन
परिहर्तुं अथप्रमादतः प्रायश्चित्तमपिनाचरितंप्रधान
कर्मविपाकसमयेच विपच्येत तथापियावंतमसावन
र्थंप्रसूते तावा न्सप्रत्यवमर्शः मृष्यंते हि पुण्यसंभारोप
नीनसुखसुधामहाह्रदावगाहिनः कुशलाःपापमात्रोप
पादितांदुःखवन्हिकणिकां अतःकुशलस्यमहतःपुण्य
स्य नापकर्षाय प्रलयायपर्याप्तः इत्यतिकस्मात्पुण्यव
त उत्तरं कुशलंहिमेवह्यन्यदस्ति प्रधानकर्मविपाकत
या व्यवस्थितं दाक्षणीयादिदक्षिणांतं यत्रायं संकरःस्व
ल्पः स्वर्गेप्यास्यफले संकीर्णे पुण्यलब्धजन्मनः स्वर्गा
त्सर्वथादुःखेनापराभृष्टादपकर्षमल्पमल्पदुःखसंभेदं
करिष्यतीतित्त्तृतीयांगतिं विभजते नियतेति बलीय
स्त्वेनेह प्राधान्यमभिमतंनत्वंगितया बलीयस्त्वंच नि
यतविपाकत्वेनान्यदानवकाशत्वादनियतविपाक
स्यतुदुर्बलत्वमन्यदासानकाशत्वात् चिरमवस्थानंबी
जभावमात्रेणनपुनःप्रधानोपकारितयातस्यस्वतंत्र
त्वात् ननुप्रायणेनैकदैवकर्माशयोभिव्यज्यतइत्यु
क्तमिदीनींचचिरावस्थानमुच्यते तत्कथंपरंपूर्वेणन
विरुध्यतइत्याशयवानाइति कथमिति उत्तरं अदृष्टेति
जात्यभिप्रायमेकवचनं तदितरस्यगतिमुक्तामवधार
यतियस्त्वदृष्टेतिशेषंसुगमं उक्तंक्लेशमूलत्वकर्मणः कर्म

मूलत्वञ्चविपाकानां अथविपाकाःकस्यमूलं येनामी-
त्यक्तव्यादूत्यतआह तेह्लादहेतुत्वात् व्याचष्टे तेजन्मा
युर्भोगाइति यद्यपिजन्मायुषोरेवह्लादपरितापपूर्वभा
वितयातत्फलत्वं नतुभोगस्यह्लादपरितापोदयानंत
रभाविनस्तदनुभवात्मनस्तथाप्यनुभाव्यतयाभो-
ग्यतयाभोगकर्मतामात्रेणभोगफलत्वमितिमंतव्यम्
नन्वपुण्यहेतुकाजात्यायुर्भोगाःपरितापफलाभवंतु
हेयाःप्रतिकूलवेदनीयत्वात्कस्मात्पुनःपुण्यहेतवस्त्य
ज्यंते सुखफलाःअनुकूलवेदनीयत्वात् नचैषांप्रत्यात्म
वेदनीयानुकूलताशक्यासहस्रेणाप्यनुमानागमैरपा
कर्त्तुंनचह्लादपरितापौ परस्पराविनाभूतौ यतोह्लादउ
पादीयमानेपरितापोप्यवर्जनीयतयापतेत् तयोर्भिन्न-
हेतुकत्वाद्भिन्नरूपत्वाच्चेत्यतआह यथाचेदमितियद्य
पिनष्टयञ्जनैःप्रतिकूलात्मतयाविषयसुखकालेसंवेद्य-
ते दुःखंतथापियोगिभिरिति प्रश्नपूर्वकं तदुपपादनायसू
त्रमवतारयति कथंतदुपपद्यतइति परिणामेत्यादिसूत्रं
परिणामश्चतापश्चसंस्कारश्चएतान्येवदुःखानितैरिति
परिणामदुःखतयाविषयसुखदुःखतामाह सर्वस्याय
मिति नखलुसुखंरागानुवेधमंतरेणसंभवति नह्यस्ति
संभवोनतत्र तुष्यति तच्चतस्यसुखमितिरागस्यच प्र
वृत्तिहेतुत्वात् प्रवर्तेश्चपुण्यापुण्योपचयकारित्वात्-
त्रास्तिरागजः कर्माशयोसततोनुपजननात् तदाचसुखं

भुञ्जानस्तत्रसक्तोविच्छिन्नावस्थेनद्वेषेण द्वेष्टि दुःखसाध
नानिपरिहर्त्तुमशक्तोमुह्यतिचेति द्वेषमोहकृतोप्यस्ति
कर्माशयः द्वेषवन्मोहस्यापिविपर्ययापरनाम्नःकर्मा
शयहेतुत्वमविरुद्धं ननुकथंरक्तोद्वेष्टिमुह्यतिवाराग
काले द्वेषमोहयोरदर्शनादित्यतआह तथाचोक्तं
विच्छिन्नावस्थान क्लेशानुपपादयद्भिरस्माभिस्तदने
न वाङ्मनसप्रवृत्तिजन्मनोपुण्यापुण्ये दर्शितेइतिरा
गादिजन्मनःकर्तव्यमिदमिति मानसस्यसंकल्पस्य
साभिलाषत्वेन वाचनिकत्वस्याप्यविशेषात् यथाहुः
साभिलाषश्चसंकल्पोवाच्यार्थोनातिरिच्यतइति शारी
रमपिकर्माशयंदर्शयति नानुपहत्येति अतएव धर्म
शास्त्रकाराःपंचसूनागृहस्थस्येत्याहुः स्यादेतन्नप्रत्या
त्मवेदनीयस्यविषयसुखस्यप्रत्याख्यानमुचितंयोगेन
नांत्मनुभवविरोधादित्यतआह विषयसुखंचाविद्ये
त्युक्तंचतुर्विधविपर्यासलक्षणामविद्यांदर्शयद्भिरिति
नापातमात्रमाद्रियंते वृद्धाःअस्तिखल्वापाततो मधुवि
षसंपृक्तान्नोपभोगोपिसुखानुभवःप्रत्यात्मवेदनीयः
किंत्वायत्यामसुखमित्यंचदर्शिताभगवतेवेतिविषयें
द्रियसंयोगाद्यत्तदग्रेमृतोपमं परिणामेविषमिवतत्सुखं
राजसंस्मृतमितिचोदयति यभोगेष्विति नवयंविषय
माह्लादंसुखमातिष्ठामहे किंतु तृप्यतांपुंसांतत्तद्विषय
प्रार्थनापरिक्लिष्टचेतसांतस्यैवमहद्दुःखंनचेयमुपभो

प्रत्यादेवाहंकारममकारानुपातनमितिनसम्यग्दर्शनादन्यत्परित्राणमस्तीत्याह तदेवमिति तदेवमौपाधिकं विषयसुखस्यपरिणामतःसंस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविकमादर्शयति गुणवृत्तिविरोधाच्चेतिव्याचष्टे प्रख्याप्रवृत्तिस्थितिरूपाः बुद्धिरूपेण परिणतागुणाःसत्त्वरजस्तमांसिपरस्परानुग्रहतंत्राःशांतंसुखात्मकं घोरंदुःखात्मकंमूढं विषादात्मकमेवप्रत्ययंसुखोपभोगरूपमपित्रिगुणमारभंते नन्वस्तोपितादृशरूपोस्यपरिणामः स्थिरइत्याह चलंचगुणवृत्तमिति क्षिप्रपरिणामिच्चित्तमुक्तं नन्वेकःप्रत्ययःकथंपरस्परविरुद्धशांत घोरमूढत्वान्येकदा प्रतिपद्यतइत्यतआह रूपातिशयावृत्त्यतिशयाश्चपरस्परेणविरुध्यंते रूपाण्यष्टौभावाधर्मादयो वृत्तयःसुखाद्यास्तदिहधर्मेणविपच्यमानेनाधर्मस्तादृशोविरुध्यते एवंज्ञानवैराग्यैश्वर्यैःसुखादिभिश्चतादृशान्येवतद्विपरीतानिविरुध्यंते सामान्यानित्वसमुदाचरद्रूपाणिअतिशयैः समुदाचरद्भिः सहाविरोधात्प्रवर्तंतेइति ननुगृण्हीमएतत्तथापि विषयसुखस्यकुतःस्वाभाविकोदुःखतेत्यतआह एवमेतदिति उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेदइत्यर्थः तत्किमिदानीमात्यंतिकमेवतादात्म्यं तथाचबुद्धिव्यपदेशभेदौनकल्पेतेइत्यतआह गुणप्रधानेति सामान्यात्मनागुणभावोतिशयात्मना

पादेयमित्यतआह उपादानेचहेतुवादः उपादानेहि
कार्यत्वेनानित्यत्वेसति मोक्षत्वादेवच्यवेत् अमृतत्वंहि
मोक्षः नापि विशुद्धोविज्ञानेसंतानोभवत्यमृतः संतानि
भ्योव्यतिरिक्तस्यसंतानस्यवस्तुसतोअभावात्संतानिनां
चानित्यत्वात्तस्मात्तथापतितव्यं यथाशाश्वतवादोभव
ति तथाचपुरुषार्थत्वात्अपवर्गस्येत्याह उभयप्रत्याख्यानइ
तितस्मात्स्वरूपावस्थानमेवात्मनोमोक्ष इतिएतदेवस
म्यग्दर्शनं तदेतच्छास्त्रंचतुर्व्यूहमभिधीयते हेयंदुःख=
मनागतं अनागतमित्यतीतवर्त्तमानेव्यवच्छिनत्ति तत्रो=
पपत्तिमाह दुःखमतीतमिति ननुवर्त्तमानमुपभुज्यमानं
नभोगेनात्तिवाहितमिति कस्मान्नहेयमित्यतआह
वर्तमानंचेति सुगमंहेयमुक्तंतस्यनिदानमुच्यते द्रष्टृ
दृश्ययोःसंयोगोहेयहेतुः द्रष्टृस्वरूपमाह द्रष्टेतिचि=
तिच्छायापत्तिरेवबुद्धेर्बुद्धिप्रतिसंवेदित्वमुदासीन=
स्यापिपुंसः नन्वेतावतापिबुद्धिरेवानेनदृश्येत नदृश्येरन्
शब्दादयोत्यंतव्यवहितादत्यतआह दृश्याबुद्धिस्त्वे
ति इंद्रियप्रणालिकयाबुद्धौशब्दाद्याकारेणपरिणतायां
दृश्यायांभवंति शब्दादयोपिधर्मादृश्याइत्यर्थः ननुतदा
कारापत्त्याबुद्धिःशब्दाद्याकाराभवतु पुंसस्तुबुद्धिसंबं
धेत्युपगम्यमानपरिणामित्वं असंबंधेवा कथंतेषांबु
द्धिसत्त्वोपारूढानामपिशब्दादीनांदृश्यत्वंनहिदर्शिना
संस्पृष्टंदृश्यंदृष्टमित्यतआह तदेतदृश्यमिति प्रपंचि

तमिदमस्माभिः प्रथमपाद एव यथा चित्यात्मसंपृक्तमपि बुद्धिसत्त्वमत्यंतस्वच्छतया चितिबिंबोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति अतएव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीतान्सुखादीन्भुंजानः स्वामीभवति द्रष्टा तादृशं चास्य बुद्धिसत्त्वं भवति तदेतद्बुद्धिसत्त्वं शब्दाद्याकारवद्दृश्यमयस्कांतमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः कस्मात् अनुभवकर्मविषयतामापन्नं यतः अनुभवो भोगः पुरुषस्य कर्मक्रिया तद्विषयतां भुज्यमानतामापन्नं यस्मात् तः स्वं भवति ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथमनुभवविषय इत्यत आह अन्यस्वरूपेणेति यदि हि चैतन्यरूपं वस्तु तो बुद्धिसत्त्वं स्यात् भवेत्स्वयंप्रकाशं किंतु स्वं चैतन्यादन्यज्जडरूपं तेन प्रतिलब्धात्मकं तस्मात्तदनुभवविषयः ननु यस्य हि यत्र किंचिदायत्तं तत्तदधीनं न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किंचिदायत्तमिति कथं च तत्तंत्रं तथा च न तस्य कर्मेत्यत आह स्वतंत्रमपि परार्थत्वात् पुरुषार्थत्वात्परतंत्रं पुरुषतंत्रं नन्वयं दृग्दर्शनशक्त्योः संबंधः स्वाभाविको वा स्यान्नैमित्तिको वा स्वाभाविकत्वे संबंधिनोर्नित्यत्वादशक्योच्छेदः संबंधः तथा च संसारनित्यत्वं नैमित्तिकत्वे तु क्लेशकर्मतद्वासनानामंतःकरणवृत्तितया सत्यंतःकरणे भावादंतःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसंगादनादित्वस्य च सर्गादाव संभवादनुत्पाद एव संसार

सस्मात् यथोक्तं पुमानकर्त्तायेषांतु तेषामपि गुणैः क्रिया
कथमादौ भवेत्तत्र कर्मतावन्नविद्यते मिथ्याज्ञानंनतत्रा
स्तिरागद्वेषाद्ययोपिवा मनोवृत्तिर्हि सर्वेषां नचोत्पन्नंम
नस्तदेतिशंकामपनयति तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृत
संयोगोहेयहेतुः सत्यंनस्वाभाविकस्संबंधोनैमित्तिकस्तु
नचैवमादिमान् अनादिनिमित्तप्रभवतयातस्याप्यनादि
त्वात् क्लेशकर्मतद्वासनासंतानश्चायमनादिः प्रतिसर्गाव
स्थायांचसहांतुःकरणेनप्रधानसाम्यमुपगतोपिसर्गादौ
पुनस्ताद्दृगेनप्रादुर्भवति यथोपायभवोद्भिज्जभेदोमृद्भा
वमुपगतोपिपुनर्वर्षासुपूर्वरूपइत्यसकृदावेदितंप्राग्
भावितयासंयोगस्याविद्याकारणंस्थितिहेतुतयापुरुषार्थः
कारणंतद्दर्शनतस्यस्थितेस्तदिदमुक्तमर्थकृतइति त
थाचोक्तंपंचशिखेनतत्संयोगः बुद्धिसंयोगःसएवहेतु
र्दुःखस्यतस्यविवर्जनात्स्यादियमात्यंतिकोदुःखप्रती
कारः अर्थात्तदपरिवर्जनेदुःखमित्युक्तंभवति तत्रैवा
त्यंतप्रसिद्धंनिदर्शनमाह तद्यथेति पादत्राण मुपान
त्यादेतद्गुणसंयोगस्तापहेतुरित्युच्यमानेगुणानांता
पकत्वमभ्युपेतंनचतत्पिक्रियायाअस्यादेर्विकर्तृत्वस्यो
भावोयेनतप्यमन्यन्नापेक्षेत नचास्यास्तप्यतयापुरु
षःकर्मतस्यापरिणामितयाक्रियाजनितफलशालित्वा
योगात्तपेस्तप्यव्यात्तस्यतन्निवृत्तौ निवृत्तिमवगच्छा
मः ज्वलनविरहेणेवधूमाभावमित्यतआह अत्रापि

तापकस्येतिगुणानामेवतप्यतापकभावस्तत्रमृदुत्वात्
पादतलवत्सत्त्वंतप्यंरजस्तुतीव्रतयातापकंस्फूतिक
स्मात्सत्त्वमेवतप्यंनतुपुरुषःउत्तरंतपिक्रियायाइतिन
त्किमिदानींपुरुषेणनतप्यतेतथाचाचेतनस्यास्तुसत्त्वस्यतापः
किंनःछिन्नमित्यतआह दर्शितविषयत्वात् सत्त्वेतुतप्यमा
नेतदाकारानुरोधीपुरुषोप्यनुतप्यतइतिदर्शितविषयः
त्वमनुतापहेतुस्तच्चप्राग्व्याख्यातं दृश्यंव्याचष्टेप्रकाशे
ति सत्त्वस्यहिभागःप्रकाशस्तामसेनभागेनदैन्येनवाराज
सेनवादुःखेनानुरज्यतेएवंराजसादिष्वपिद्रष्टव्यं तदिद
मुक्तंपरस्परोपरक्तप्रविभागाइतिपुरुषेणसहसंयोगः
विभागधर्माणःयथाम्नायतेअजामेकां लोहितकृष्ण
शुक्लांबह्वीःप्रजाःसृजमानांसरूपाःअजोह्येकोजुषमाः
णोनुशेतेजहात्येनांभुक्तभोगामजोन्यइतीतरो पाश्रयो
णोपार्जितामूर्त्तिःपृथिव्यादिरूपायैस्तेतथोक्ताःस्यादेत
त्सत्त्वेनशांतप्रत्ययेजनयितव्येरजस्तमसोरपिसत्त्वांग
त्वेन तत्रहेतुभावादस्तिसामर्थ्यमितियदापिन्वरजस्त
मसोरंगित्वं तदापिशांतएवप्रत्ययउदीयेत नघोरोमू
ढोवासत्त्वप्राधान्यइवेत्यतआह परस्परांगांगित्वेप्यसंः
भिन्नशक्तिप्रविभागाःभवतुशांतेप्रत्ययेजनयितव्येर
जस्तमसोरंगभावस्तथापिनैषांशक्तयःसंकीर्यन्तेकाः
र्यासंकरोन्नेयोहिशक्तीनामसंकरःअसंकीर्णेनचसमु
दाचरतारूपेणशांतघोर मूढरूपाणिकार्याणिदृश्यंते

दितिसिद्धं शक्तीनामसंभेदइतिस्यादेतदसंभेदश्चेत्शक्तीनां नसंभूयकारित्वंगुणानांनजातुभिन्नशक्तीनांसंभूयकारित्वंदृष्टं ननुतंतुमृत्पिंडवीरणादीनिघटादीन्संभूय कुर्वतइत्यतआह तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनेत्यद्यपितुल्यजातीयेउपादानशक्तिनोन्यत्रसहकारिशक्तिस्त्वतुल्यजातीये घटेतुजनयितव्येनवीरणानामस्तिसहकारिशक्तिरपीतिननेतेस्तंतूनांसंभूयकारितेतिभावः तुल्यजातीयातुल्यजातीयेषु शक्येषुयेशक्तिभेदास्ताननुपतितुंशीलंयेषांतेतथोक्ताः प्रधानवेलायामिति दिव्यशरीरेजनयितव्येसत्त्वगुणःप्रधानमंगेरजस्तमसीएवंमनुष्यशरीरेजनयितव्येरजःप्रधानमंगेसत्त्वतमसी एवंतिर्यक्शरीरेजनयितव्येतमःप्रधानमंगेसत्त्वरजसीतेनैतेगुणाःप्रधानत्ववेलायामुपदर्शितसन्निधानाःकार्य्योपजननंप्रत्युद्भूतइत्यर्थः प्रधानशब्दश्चभावप्रधानःयथाद्व्येकयोर्द्विवचनैकवचनइत्यत्रद्वित्वैकत्वयोरिति अन्यथाद्व्येकेष्वितिस्यात् ननुतदाप्रधानमुद्भूतंतयाशक्यमस्तीतिवक्तुमनुद्भूतानांतुतदंगानांसद्भावेकिंप्रमाणमित्यतआह गुणत्वेपिचेति यद्यपिनोद्भूतास्तथापिगुणानामविवेकित्वात्संभूयकारित्वाच्चव्यापारमात्रेणसहकारितयाप्रधानेअंतर्नीतंसदनुमितमस्तित्वंयेषांतेतथोक्ताः ननुसंतुगुणाःसंभूयकारिणःसमर्थाःकस्मात्तेपुनःकुर्वंतिनदि-

समर्थमित्येवकार्यंजनयतिमाभूदस्यकार्योपजननंप्रति
विराम इत्यतआह पुरुषार्थकर्त्तव्यतयेति ततोनिर्व-
र्त्तितनिखिलपुरुषार्थानां गुणानामुपरमःकार्यानारं
भणं इत्युक्तंभवति ननु पुरुषस्यानुपकुर्वतः कथंपुरु
षार्थेनप्रयुज्यत इत्यतआह सन्निधिमात्रेति ननुध
र्मोधर्मलक्षणमेवनिमित्तंप्रयोजकं गुणानां किमुच्य
ते तत्पुरुषार्थप्रयुक्तादित्यतआह प्रत्ययमंतरेणेतिए
कतमस्यसत्वस्य रजसस्तमसो वाप्रधानस्य स्वकार्येप्र
वृत्तस्यवृत्तिमितरेप्रत्ययंनिमित्तंधर्मादिकंविनैवानु
वर्तमानायथाचवक्ष्यति निमित्तमप्रयोजकंप्रकृती-
नांवरणभेदस्तुततःक्षेत्रिकवदिति एते गुणाःप्रधान
शब्दवाच्याभवंतीतिसंबंधःप्रधीयते आधीयतेवि-
श्वंकार्यमेभिरितिव्युत्पत्त्याएतदृश्यमुच्यते तदेवंगुणा
नांशीलमभिधाय तस्यकार्यमाह तदेतदिति सत्कार्य-
वादसिद्धौयद्यदात्मकंतत्तेनरूपेणपरिणमत इतिभू
तेंद्रियात्मकत्वंदीपयति भूतभवेनेत्यादिनाभोगापव
र्गार्थमितिसूत्रावयवमवतारयति नत्वनुनाप्रयोजनम
पितु प्रयोजनमुररीकृत्यप्रवर्तते भोगंविवृणोति तत्रे
ति सुखदुःखे हि त्रिगुणायाबुद्धेःस्वरूपेतस्यास्तथात्वे
नपरिणामात्तयापिगुणगततयाअवधारणेनभोगइ
त्यतआह अविभागापन्नमिति एतच्चासकृद्विवेचितं
अपवर्गंविवृणोति मोक्षुरिति अपवृज्यतेनेनेत्यपव

गेःप्रयोजनं तस्याभावमाह द्वयोरिति तथाचोक्तं पंचशि
खेन अयंतुखल्विति ननु वस्तुतो भोगापवर्गौ बुद्धिवा
र्ती बुद्धिवर्तिनौच कथंतदकारणे तदनधिकरणेच पुरु
षोऽपदिश्येते इत्यत आह तावेताविति भोक्तृत्वंच पुरु
षस्योपपादितमग्रे चवक्ष्यते परमार्थतस्तु बुद्धेरेवपु
रुषार्थोपरिसमाप्तिरिति एतेन भोगापवर्गयोःपुरुषसंबं
धित्वकथनमार्गेण ग्रहणादयोपि पुरुषसंबंधिनो वे
दितव्याः तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं तत्र स्मृतिर्धा
रणं तद्गतानां विशेषाणामूहनमूहः समारोपितानांच यु
क्त्यापनयोऽपोहः ताभ्यामेवोहापोहाभ्यां तदवधारणं
तत्वज्ञानं तत्त्व वधारणपूर्वं हानोपादानमभिनिवेशः
दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते
त्रिणियेषामविशेषाणां शांतघोरमूढलक्षणविशेषरहि
तानां ये विशेषा विकारा एव नतु तत्त्वांतरप्रकृतयस्तेषां
तानाह तत्राकाशेति उत्पादक्रमानुरूप एवोपन्यास
क्रमः अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बु
द्धींद्रियाणि विशेषाः राजसस्य कर्मेंद्रियाणि मनस्तूभयात्म
कमुभयप्रधानस्येति मंतव्यं अत्रच पंचतन्मात्राणि बु
द्धिकारणकान्यविशेषत्वादस्मितावदिति विकारहेतु
त्वंचाविशेषत्वं तन्मात्रेषुचास्मितायांच अविशिष्टं सं
कलय्य विशेषान् परिगणयति गुणानामेषइति अवि
शेषानपि गणयति षडिति संकलय्योदाहरति तद्यथेति

विशेषपरंपरेणेतिगंधआत्मनापंचलक्षणःरसःआत्मना
चतुर्लक्षणःरूपमात्मनात्रिलक्षणंस्पर्शआत्मनाद्विल॰
क्षणःशब्दःशब्दलक्षणएवेतिकस्यपुनरमीषडविशेषाः
कार्यमित्यतआह एते सत्तामात्रस्यात्मनइतिपुरुषार्थ॰
क्रियाक्षमंसत्त्वस्यभावःसत्तातन्मात्रंतन्महत्तत्त्वंयावती
काचित्पुरुषार्थक्रियाशब्दादिभोगलक्षणासत्वपुरुषान्यता
ख्यातिलक्षणावा अस्ति सासर्वामहति बुद्धौसमाप्यतइत्यर्थः
आत्मनइतिस्वरूपोपदर्शनेनतुकुत्वंनिषेधति प्रकृतेर
यमाद्यःपरिणामोवास्तवोनतुतद्विवर्त्तितइतियावत्एत
त्परंविप्रकृष्टकालमविशेषेभ्यस्तदपेक्षयासन्निकृष्टका
लेभ्योलिंगमात्रंमहत्तत्त्वं तस्मिन्नेतेषडविशेषाःसत्तामा
त्रेमहत्यात्मन्यवस्थायसत्कार्यवादसिद्धेर्विवृद्धिकाष्ठा
मनुभवंति प्राप्नुवंति येपुनरविशेषाणांविशेषपरिणा॰
मास्तेषांचधर्मलक्षणावस्थाःपरिणामा इति सेयमेषां
विवृद्धिकाष्ठापरिणामकाष्ठेति तदेवमुत्पत्तिंक्रममभि
धायप्रलयक्रममाह प्रतिसंसृज्यमानाःप्रलीयमानाः
स्वात्मनि लीनविशेषाअविशेषास्तस्मिन्नेवसत्तामा॰
त्रेमहत्यात्मन्यवस्थायनिर्लीयसदेवमहत्तातिऽविशेषाः
षाः अव्यक्तमन्यत्रलयंनगच्छतीत्यलिंगं प्रतियंत्ति त॰
स्यैवविशेषणंनिःसत्ताऽसत्त्वंसत्ता पुरुषार्थक्रियाक्षमत्वं
असत्तातुच्छता निष्क्रांतंसत्तायाअसत्तायाश्चयत्तत्तथोक्तं
एतदुक्तंभवति सत्त्वरजस्तमसांसाम्यावस्था नकचित्पुरु

षार्थउपयुज्यते इतिनसतीनापिगगनकमलिनीवत्तुच्छस्व
भावात्तेननासत्यपीतिस्यादेतदव्यक्तावस्थायामप्यस्ति
महदादितदात्मनानहिसतोविनाशो विनाशेवान्पुनस्
त्वादेनह्यसतउत्पादइतिमहदादिसद्भावात्पुरुषार्थेक्रि
याप्रवर्त्तेततत्कथंनिःसत्त्वमव्यक्तमित्यतआह निःसद्
सदितिनिष्क्रांतंकारणंसतःकार्यात्यद्यपिकारणाव
स्थायांसदेवशक्त्यात्मनाकार्यंतथापिस्वोचितामर्थक्रि
यामकुर्वद्सदित्युक्तंनचैतत्कारणंशशविषाणायमान
कार्यमित्याह निरसदितिनिष्क्रांतंअसतस्तुच्छरूपात्का
र्योत्तथासतिहिव्योमारविंदमिवास्मात्नकार्यमुत्पद्येते
तिभावःप्रतिसर्गमुक्तमुपसंहरति एषतेषामिति एष
इत्यनंतरोक्तात्सर्वस्यपरामर्शःलिंगमात्राद्यवस्था पुरु
षार्थकृतत्वादनित्या अलिंगावस्थातुपुरुषार्थेनाकृत
त्वान्नित्येत्यत्र हेतुमाह अलिंगावस्थायामिति कस्मा
त्पुनर्नपुरुषार्थोहेतुरित्यतआह नालिंगावस्थायामिति
भवतिनाविषयेणविषयिज्ञानमुपलक्षयतिएतदुक्तं
भवति एवंहि पुरुषार्थताकारणमलिंगावस्थायांज्ञायेत
यद्यलिंगावस्थाशब्दाद्युपभोगंवासत्वपुरुषान्यथा
ख्यातिंवापुरुषार्थंनिर्वर्त्तयेत्तन्निर्वर्त्तनेहिनसाम्याव
स्थास्यात्तस्मात्पुरुषार्थकारणत्वमस्यानज्ञायतइति
नास्याःपुरुषार्थताहेतुउपसंहरतिनासाविति इतिस्त
स्मादर्थेअनित्यामवस्थामाहत्रयाणांलिंगमात्राविशेष

विशेषाणामितिपर्वस्वरूपंदर्शयित्वागुणस्वरूपमाह
गुणास्त्विति निदर्शनमाह यथादेवदत्त इतियत्रात्यंतभि
न्नानांगवामुपचयापचयौदेवदत्तोपचयापचयहेतू
तत्रकैव कथागुणेभ्योभिन्नाभिन्नानांव्यक्तीनामुपजना
पाययोरित्यर्थः ननुसर्गेक्रमःकिमनियतोनेत्याहलिंगमा
त्रमिति नखलुन्यग्रोधधानास्त्रन्हायैवन्यग्रोधधानाशा
खिनंसां द्रम् शाड्वलदलजटिलशाखाकांडनिपीतः
मार्तंडचंडातपमंडलमारभंतेकिंतुक्षितिसलिलतेजःसं
पर्कासरंपरोपजायमानांकुरपत्रकांडतालादिक्रमे
णएवमिहापियुक्त्यागमसिद्धःक्रमश्चास्थेयइतिः
कथंभूतेंद्रियाण्यपितथाचोक्तंपुरस्तादिदमेवसूत्रंप्रथ
मंव्याचक्षाणैः अथविशेषाणांकस्मान्नतत्वांतरपरिणा
मउक्तइत्यतआह नविशेषेभ्यइति तत्किमिदानीम
परिणामिनएवविशेषास्तथाचनित्याःप्रसज्येरन्नित्यत
आह तेषांत्विति व्याख्यातंदृश्यं द्रष्टुःस्वरूपावधारणा
र्थमिदमारभ्यते दृश्यःव्याचष्टेदृशिमात्रइतिविशेषणा
निधर्मास्तैरपरामृष्टा तदनेनमात्रग्रहणस्यतात्पर्यंदर्शितं
स्यादेतत् यदिसर्वविशेषणरहितादृक्शक्तिर्नतर्हिः
शब्दादयोदृश्येरन्नहिदृशिनाऽसंस्पृष्टंदृश्यंभवतीत्य
तआहसपुरुषइति बुद्धिदर्पणेपुरुषप्रतिबिंबसंक्रां
तिरेवबुद्धिप्रतिसंवेदित्वंपुंसस्तथाचदृशिछायापन्नः
याबुध्यासंस्पृष्टाःशब्दादयोभवंतिदृश्याइत्यर्थःस्यादेत

त्पारमार्थिकमेवबुद्धिचैतन्ययोःकस्मादैक्यंनोपेयते किमनयातच्छायापत्त्येत्यतआह सबुद्धेर्नसरूपइति तथासरूपस्यतच्छायापत्तिरपिदुर्घटेत्यतआह नात्यंतंविरूपइति तथासारूप्यंनिषेधतिनित्यवदितिहेतुंच इति कस्मात्स हेतुकंवैरूप्येहेतुमाह ज्ञातेति परिणामिनीबुद्धिर्यस्मात्तस्माद्विरूपायदाखल्वियंशब्दाद्याकाराभवतितदाज्ञातोस्याः शब्दादिलक्षणो भवति विषय स्तदनाकारत्वे त्वज्ञात स्तथा च कदाचिदेवतदाकारतांदधतीपरिणामिनीति प्रयोगश्च भवतिबुद्धिःपरिणामिनीज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति तद्वैधर्म्यंपुरुषस्यतद्विपरीतत्वाद्धेतोः सिद्धतीत्याहसदेति स्यादेतत्सदाज्ञातविषयश्चेत्पुरुषोनतर्हिकेवलीस्यादित्याशयवान्प्रश्न इति कस्मादिति उत्तरंनहिबुद्धिश्चनामेति ग्राह्यग्रहणयोरस्तिसहसंभवोनिरोधावस्थायांनतउक्तविरोधसूचनायपुरुषविषयश्चेति तेनाद्यश्चकारोबुद्धिंविषयत्वेनसमुच्चिनोति परिशिष्टौतुविरोधद्योतकौचकाराविति प्रयोगस्तुपुरुषोऽपरिणामीसदासंप्रज्ञातव्युत्थानावस्थयोर्ज्ञातविषयत्वात्यःपरिणामीनासौसदाज्ञातविषयोयथाश्रोत्रादिरिति व्यतिरेकीहेतुः अपरमपिवैधर्म्यमाह किंचपरार्थेति बुद्धिःखलुक्लेशकर्मवासनादिभिर्विषयेंद्रियादिभिश्चसंहत्यपुरुषार्थमभिनिर्वर्तयंतीपरार्थाप्रयो

गश्चपरार्थाबुद्धिःसंहत्यकारित्वात्शयनासनाभ्यंगव
दितिपुरुषस्तु नतथेत्याह स्वार्थःपुरुषइति सर्वेपुरुषाय
कल्पते पुरुषस्तुनकस्मैचिदित्यर्थः वैधर्म्यांतरमाह
सर्वैति सर्वानर्थान्शांतघोरमूढांस्तदाकारपरिणता
बुद्धिरध्यवस्यति सत्त्वरजस्तमसान्वेते परिणामाइतिसि
द्धात्रिगुणा बुद्धिरिति नचैवंपुरुषइत्याह गुणानामि
ति तस्यतिविंबितःपश्यतिनतु तदाकारपरिणतइत्य
र्थः उपसंहरतिअतइति अस्तुतर्हि विरूपइतिनात्यं
तंविरूपः तस्माद्यतःशुद्धोपिप्रत्ययानुपश्यः यथाचैतत्त
थोक्तंवृत्तिसारूप्यमितरत्रेत्यत्रतथाचोक्तंपंचशिखेन
अपरिणामिनीहिभोक्तृशक्तिरात्मात्अतएवबुद्धावप्रति
संक्रमाच्चपरिणामिनिबुद्धिरूपेर्थेसंक्रांतेवतद्वृत्तिंबुद्धि
वृत्तिमनुपतति नन्वसंक्रांताकथंसंक्रांतेवकथंवा वृ
त्तिंविनाअनुपततीत्यतआह तस्याश्चेति प्राप्तश्चैतन्यो
पग्रहरुपरागोयेनरूपेणतत्तथाप्राप्तचैतन्योपग्रहरू
पंयस्याःसातथोक्ता एतदुक्तंभवति तथानिर्मलेजलेअसं
क्रांतेपिचंद्रमाःसंक्रांतप्रतिबिंबतयासंक्रांतइव ए
वमत्राप्यसंक्रांतापि संक्रांतप्रतिबिंबाचितिशक्तिःसं
क्रांतेवतेन बुध्यात्मत्वमापन्नांबुद्धिवृत्तिमनुपत
तीति तदनेनानुपश्यइति व्याख्यातंतामनुकारेण प
श्यतीत्यनुपश्यइति द्रष्टृदृश्ययोःस्वरूपमुक्त्वा स्वस्वा
मिलक्षसंबंधांगं दृश्यस्य द्रष्टृर्थत्वमाह तदर्थएवेत्यत्र

दृशिरूपस्य पुरुषस्य भोक्तुः कर्मरूपतां भोग्यतामापन्नं दृश्यमिति तस्मात्तदर्थ एव दृष्ट्रर्थ एव दृश्यस्यात्मा भवति न तु दृश्यार्थः ननु नात्मान्यात्मार्थ इत्यत आह स्वरूपं भवतीति एतदुक्तं भवति सुखदुःखात्मकं दृश्यं भोग्यं सुखदुःखे चानुकूलयितृ प्रतिकूलयितृणी ततस्तेन तदर्थ एव व्यवतिष्ठेते विषया अपि हि शब्दादयस्तादात्म्यादेव चानुकूलयितारः प्रतिकूलयितारश्च न चात्मैवैषामनुकूलनीयः प्रतिकूलनीयश्च स्वात्मनि वृत्तिविरोधादतः पारिशेष्याच्चितिशक्तिरेवानुकूलनीया च प्रतिकूलनीया च तस्मात्तदर्थमेव दृश्यं न तु दृश्यार्थं अतश्च तदर्थ एव दृश्यस्यात्मा न दृश्यार्थो यत्स्वरूपमस्य यावत्पुरुषार्थमनुवर्तते निवर्तते च पुरुषार्थे निवृत्ते इत्याह स्वरूपं तु दृश्यस्य जडं पररूपेणात्मरूपेण चैतन्येन प्रतिलब्धात्मकमनुभूतस्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते भोगः सुखाद्याकारः शब्दाद्यनुभवोऽपवर्गः सत्त्वपुरुषान्यतानुभवस्तच्चैतदुभयमप्याजानतो जडाया बुद्धेः पुरुषच्छायापत्त्या तिपुरुषस्यैव तयोश्च पुरुषभोगापवर्गयोः कृतयोः दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तं अत्रान्तरे चोदयति स्वरूपहानादिति परिहरति ननु विनश्यति नन्वसत्तानुपलम्भ कथं न विनश्यतीत्याशयवानृच्छति कस्मादिति सूत्रेणोत्तरमाह कृतार्थत्वात् कृ

तोर्थोयस्यपुरुषस्यसतथातंप्रतिनष्टमप्यनष्टंतदृश्यंकु
तः सर्वान्पुरुषान्कुशलानकुशलान्प्रतिसाधारण
त्वात् व्याचष्टे कृतार्थमेकमिति नाशोऽदर्शनं अनष्ट
तु दृश्यमन्यपुरुषसाधारणत्वात् तस्माद्दृश्यात्पर
स्यात्मनः चैतन्यरूपं तेनतदिदृश्रुतिस्मृतीतिहास
पुराणप्रसिद्धमव्यक्तमनवयवमेकमनाश्रयंव्यापि
नित्यंविश्वकार्यशक्तिमत् यद्यपिकुशलेन तंप्रति
कृतकार्येन दृश्यते तथाप्यकुशलेन दृश्यमानंनना
स्तिनहिरूपमंधेननदृश्यतइति चक्षुष्मतापिदृश्य
मानमभावप्राप्तंभवतिनचप्रधानवदेकएवपुरुष
स्तन्नानात्वस्य जन्ममरण सुखदुःखोपभोगमुक्तिसं
सारव्यवस्थयासिद्धेः एकत्वश्रुतीनांच प्रमाणांतर
विरोधात्कथंचिद्देशकालविभागभावेन भक्त्याप्युप
पत्तेः प्रकृत्येकत्वपुरुषनानात्वयोश्चश्रुत्यैवसाक्षात्प्र
तिपादनात् अजामेकांलोहितशुक्लकृष्णां बह्वीःप्रजाः
सृजमानानां सरूपाः अजोह्येकोजुषमाणोनुशेतेजहा
त्येनांभुक्तभोगामजोन्यइति श्रुतिः अस्याएवश्रुतेश्चा
नेनसूत्रेणार्थोनोदितइतियतो दृश्यं नष्टमप्यनष्टंपुरु
षांतरंप्रत्यस्ति अतोदृग्दर्शनशक्त्योर्नित्यत्वादनादिः
संयोगोव्याख्यातः अत्रैवागमिनामनुमतिमाह तथा
चोक्तमिति धर्मिणांगुणानामात्मभिरनादिसंयोगाद्ध
र्ममात्राणांमहदादीनामप्यनादिः संयोगइति एकै

कस्यमहदादेःसंयोगोऽनादिरप्यनित्यएव यद्यपि त
थापिसर्वेषामहदादीनां नित्यःपुरुषांतराणांसाधार
णत्वादत्रउक्तंधर्ममात्राणामिति मात्रग्रहणेनव्याप्तिं
गमयति अतएतदुक्तंभवतियद्यप्येकस्यमहतः संयोगो
ऽतीततामापन्नस्तथापिमहदंतरस्यपुरुषेणसंयोगोना
तीतइतिनित्यउक्तःतदेवंतादर्थ्येसंयोगकारणेउक्तेप्रा
संगिकेप्रधाननित्यत्वे संयोगसामान्यनित्यत्वेहेतौचो
क्तेसंयोगस्ययत्स्वरूपमसाधारणोविशेषइतियावत्
तदभिधित्सयेदंसूत्रंप्रववृते स्वगःयतोदृश्यंतदर्थमतः
स्तज्जनितमुपकारंभजमानःपुरुषस्तस्यस्वामीभवन्
तिभवतिचदृश्यमस्यस्वंसचानयोःसंयोगःशक्तिमा
त्रेणव्यवस्थितस्तत्स्वरूपोपलब्धिहेतुःतदेतद्भाष्यमत्र
वद्योतयतिपुरुषःस्वामीयोग्यतामात्रेणदृश्येनस्वेनयो
ग्यतयैवदर्शनार्थं संयुक्तःशेषंसुगमं स्यादेतद्दृष्टःस्व
रूपोपलब्धिरपवृज्यतेअनेनेत्यपवर्गउक्तःनन्वमोक्षः
साधनत्वात्तथासत्ययंमोक्षत्वादेवव्यवतेत्यतआह दर्श
नकार्यावसानो बुद्धिविशेषेणसहपुरुषविशेषस्यसं
योगइतिदर्शनं वियोगकारणमुक्तं कथंपुनर्दर्शनका
र्यावसानत्वं संयोगस्येत्यतआह दर्शनमिति ततःकि
मित्यतआह अदर्शनमविद्यासंयोगनिमित्तमित्युक्तं
उक्तमर्थंस्पष्टयति नात्रेति ननुदर्शनमदर्शनंविरो
धिनंविनिवर्त्तयतु बंधस्यकुतोनिवृत्तिरित्यतआह

दर्शनस्येति वुध्यादिविविक्तस्यात्मनः स्वरूपावस्थान
मोक्षउक्तोनतस्यसाधनंदर्शनमपितुअदर्शननिवृ
त्तेरित्यर्थः असाधारणंसंयोगेहेतुमदर्शनविशेषं
गृहीतुमदर्शनमात्रंविकल्पयति किंचेदमितिपर्यु
दासंगृहीत्वाह किंगुणानामधिकारःकार्यारंभणसा
मर्थ्यं ततोहिसंयोगःसंसारहेतुरुपजायते प्रसज्यप्र
तिषेधंगृहीत्वा द्वितीयंविकल्पमाह अहोस्विदिति
दर्शितोविषयःशब्दादिः सत्त्वपुरुषान्यताच येनचि
त्तेनतस्यतद्विषयस्यानुत्पादः एतदेवस्फोरयति स्व
स्मिन्दृश्येशब्दादौसत्त्वपुरुषान्यतायांचेति तावदेव
प्रधानंविचेष्टतेनयावत् द्विविधदर्शनमभिनिर्वर्त्तय
ति निष्पादितोभयदर्शनंतुविनिवर्त्ततइति पर्युदास
एवतृतीयेविकल्पमाह किमर्थवत्तागुणानांसत्का
र्यवादसिद्धौहिभाविनावपि भोगापवर्गौव्यपदे
श्यनयास्तइत्यर्थः पर्युदासएवचतुर्थंविकल्पमाह अ
थाविद्याप्रतिसर्गकालेस्वचित्तेनसह निरुद्धा प्रधान
साम्यमागतावासनारूपेण स्वचित्तोत्पत्तिबीजंतेन
दर्शनादन्या विद्यावासनैवादर्शन मुक्तापर्युदासएव
पंचमंविकल्पमाह किंस्थितिसंस्कारस्य प्रधानवर्त्ति
नः साम्यपरिणामपरंपरावाहिनः क्षयेगतिर्महदादि
विकारारंभस्तद्धेतुःसंस्कारः प्रधानस्यगतिसंस्का
रस्तस्याभिव्यक्तिःकार्योन्मुखत्वं तदुभयसंस्कारसदृ

वेमत्तांतरानुमतिमाह यत्रेदमुक्तमैकांतिकत्वंच्यासेष द्भिःप्रधीयतेजन्यते विकारजातमनेनेतिप्रधानं तच्चेतस्थि त्यैववर्तेत नकदाचिद्गत्यानतो विकाराकरणान्नप्रधीय तेनेनकिंचिद्प्रधानंस्यात् अथगत्यैववर्तेतनकदाचि दपिस्थित्यातत्राह तथागत्यैवेति क्वचित्पाठःस्थित्यैग त्यैइति तादर्थ्येचतुर्थीएवकारश्चद्रष्टव्यःस्थित्यैचेन्नव र्तेतनक्वचिद्विकारोविनश्येततथाच भावस्यसतोऽविना शिनोनोत्पत्तिरपीतिविकारत्वादेवन्यवेत एवंचनप्रधी यते अत्रकिंचिदित्यप्रधानंस्यात् तदुभयथास्थित्यागत्र त्याचास्यवृत्तिः प्रधानव्यवहारंलभतेनान्यथा एकांता भ्युपगमेनकेवलं प्रधानेकारणांतरेष्वपि परब्रह्मतन्मा यापरमाण्वादिषुकल्पितेषुसमानश्चर्चोविचारःतान्यपि हि स्थित्यैववर्त्तमानानिविकाराकरणादकारणानिस्युः गत्यैववर्तमानानि विकारानित्यत्वादकारणानिस्युरि तिचपर्युदासएव षष्ठंकल्पमाह दर्शनशक्तिरेवेतियथा प्रजापतिव्रतेनेक्षेतोद्यंतमादित्यमिति अनीक्षणप्रत्या सन्नःसंकल्पोगृह्यते एवमिहापि दर्शननिषेधेतत्प्र= त्यासन्नात्तन्मूलाशक्तिरुच्यतेसाचदर्शनंभोगादिल= क्षणंप्रस्तोतुं द्रष्टारंदृश्येनयोजयतीतिअत्रेवश्रुतिमा ह प्रधानस्येति स्यादेतत्प्रधानं आत्मख्यापनार्थं प्रवर्त्त तेइतिश्रुतिराह नतुआत्मदर्शनशक्तिःप्रवर्तेतइत्यत आह सर्वबोध्यबोधसमर्थइतिप्राक्प्रवृत्तेःप्रधानस्य

नात्मख्यापनमात्रंप्रवृत्तौप्रयोजकमसामर्थ्येतद्योगात्त
स्मात्सामर्थ्यं प्रवृत्तेःप्रयोजकमितिश्रुत्यार्थादुक्तमित्यर्थः
दर्शनशक्तिःप्रधानाश्रयेत्यंगीकृत्यषष्ठःकल्पःइमामे
वोभयाश्रयामास्थायसप्तमकल्पमाह उभयस्यपुरुष
स्यचदृश्यस्यचादर्शनं दर्शनशक्तिधर्मेद्वयेकेस्यादेत
न्मृष्यामहे दृश्यस्येति तस्यसर्वशक्त्याश्रयत्वान्नद्रष्टुरिति
पुनर्मृष्यामः नहितदाधाराज्ञानशक्तिस्तत्रज्ञानस्यास
मवायादन्यथापरिणामानतिरित्यतआह नत्रेदमिति
भवतुदृश्यात्मकं तथापितस्यजडत्वेन तद्दर्शनशक्तिका
र्यदर्शनमपिजडमितिनशक्यतद्धर्मत्वेन विज्ञातुंजड
स्य स्वयमप्रकाशत्वादतोदर्शेरात्मनःप्रत्ययंचैतन्यच्छा
यापत्तिमपेक्ष्यदर्शनं तद्धर्मत्वेनभवति विज्ञायतेविष
येणविषयिणोलक्षणात् नन्वेतावतापिदृश्यधर्मत्वम
स्यभवति नतुपुरुषधर्मत्वमपीत्यतआह तथापुरुषः
स्येति सत्वंपुरुषस्यानात्मभूतमेवतथापिदृश्यबुद्धिस
त्वस्यप्रत्यय वतन्यच्छायापत्तिस्तमपेक्ष्यपुरुषधर्म
त्वेनच नतुपुरुषधर्मत्वेनएतदुक्तंभवतिचैतन्यवि
बोद्ग्राहितयाबुद्धिचैतन्ययोरभेदाद्बुद्धिधर्मोप्यैत
न्यधर्मोदवचकास्तीति अष्टमंकल्पमाह दर्शनंज्ञा
नमेवशब्दादीनांमदर्शनंनतुसत्वपुरुषान्यताया
इतिकेचिद्यथाचक्षूरूपेप्रमाणमपिरसादावप्रमा
णमुच्यते एतदुक्तंभवतिसुखाद्याकारशब्दादिज्ञा

नसाम्यमापादयति नथेदं विद्यमानं गुणपुरुषान्यता-
ख्यातिज्ञानं चित्तनिवृत्तिंनकरोति परवैराग्येण ज्ञान
प्रसादमात्रेण ससंस्कारंनिरुद्धंविनष्टंकरिष्यतीतिका
प्रत्याशायस्मिन् सत्येनयद्भवति तत्तस्य कार्येनतुय
स्मिन्नसतीतिभावः अत्रैकदेशिमतेनपरिहारमाहत
त्रेति ईषदपरिसमाप्तआचार्यआचार्यदेशीयः आचा
र्यस्तुवायुप्रोक्तेकृतलक्षणः आचिनोतिचशास्त्रार्थ
मान्त्रारेस्थापयत्यपिस्वयमाचरतेयस्मादाचार्यस्तेन
चोच्यतइतिभोगविवेकख्याति रूपपरिणतबुद्धिनि
वृत्तिरेवमोक्षःनच बुद्धिस्वरूपनिवृत्तिः सावधर्मेमे
षां तविवेकख्यातिप्रतिष्ठाया अनंतरमेवभवतिस
त्यपिबुद्धिस्वरूपमात्रावस्थानइत्यर्थः एतदेवस्फोर
यति अदर्शनस्य बंधकारणस्याभावाद्बुद्धिनिवृत्ति-
स्तत्त्वादर्शनं बंधकारणंदर्शनान्निवर्तते दर्शननिवृ
त्तिस्तुपरवैराग्यसाध्यासत्यपिबुद्धिस्वरूपावस्थाने
मोक्षइतिभाव.एकदेशिमतमुपन्यस्यस्वमतमाहत
त्रचित्तनिवृत्तिरेवमोक्षःननूक्तंदर्शनेनिवृत्तेऽचिरा
च्चित्तस्वरूपनिवृत्तिर्भवतीति कथंदर्शनकार्येसतत्रा
ह किमर्थमस्थानेमतिविभ्रमइति अयमभिसंधिःयदि
दर्शनस्यसाक्षाच्चित्तनिवृत्तौकारणभावमंगीकुर्वीम
हि ततएवमुपालभ्येमहिकिंतुविवेकदर्शनंप्रकर्ष-
काष्ठांप्राप्तंनिरोधसमाधिभावनाप्रकर्षक्रमेणचित्त

निवृत्तिमसुरुषस्वरूपावस्थानोपयोगीत्यातिष्ठामहेऽ
तत्कथमुपलभ्येमहीति तदेवं व्यूहद्वयमुक्त्वातृतीय
व्यूहाभिधानाय सूत्रमवतारयति हेयंदुःखमुक्तमि
तितुल्यंव्याचष्टे तस्येति अस्तिहि महाप्रलयेपिसंयो
गाभावेनउक्तमात्यंतिकइतिदुःखोपरमोहानमितिपु
रुषार्थेनादर्शितशेषमतिरोहितार्थंहानोपायलक्षणंचतुर्थं
व्यूहमाख्यातुंसूत्रमवतारयतिविपः आगमानुमानाभ्या
मपिविवेकख्यातिरस्तिनचासौव्युत्थानंतसंस्कारंवानिव
र्त्तयति तद्धतोपितदनुवृत्तेरितितन्निवृत्त्यर्थमविप्लवेति
विप्लवोमिथ्याज्ञानंतद्र हिता एतदुक्तंभवति श्रुतमये
नज्ञानेनविवेकंगृहीत्वायुक्तिमयेनचव्यवस्थाप्यदीर्घ
कालनैरंतर्य सत्कारासेवितायाभावनायाःप्रकर्षपर्यंतं
समधिगतासाक्षात्कारवतीविवेकख्यातिर्निवर्त्तितसवा
सन मिथ्याज्ञानानिर्विप्लवाहानोपायइतिशेषंसुगमं वि
वेकख्यातिनिष्ठायाःस्वरूपमाह सूत्रेण तस्यप्रज्ञाव्याच
ष्टे तस्येति प्रत्युदितख्यातेर्वर्त्तमान ख्यातेर्योगिनःप्रत्या
म्नायःपरामर्शःअशुद्धिरावरणं चित्तसत्वस्य तदेवमलं
तस्यापगमात् चित्तस्य प्रत्ययांतरानुत्पादेतामसराजसः
व्युत्थानप्रत्ययानुत्पादेनिर्विप्लव विवेकख्यातिनिष्ठामा
पन्नस्यसप्तप्रकारैवप्रज्ञाविवेकिनोभवतिविषयभेदा
त्तज्ञाभेदःप्रकृष्टांतोयासांभूमीनामवस्थानांतास्तथो
क्ताःयतःपरंनास्तिसप्रकर्षःप्रांताभूमयोयस्याःप्रज्ञायाः

निवेकख्यातेःसातथोक्ता तास्वेव सप्तप्रकाराःप्रज्ञाभूमी
रुदाहरति तद्यथेति तत्रपुरुषप्रयत्ननिष्पाद्यासुचत
सृषु भूमिषु प्रथमामुदाहरति परिज्ञातंहेयंयावत् कि
लप्राधानिकं तत्सर्वंपरिणामतापसंस्कारैर्गुणवृत्तिवि
रोधात् दुःखमेवेतिहेयंतत्परिज्ञातं प्रांततांदर्शयति
नास्यपुनः किंचिदपरिज्ञातंपरिज्ञेयमस्ति द्वितीयामा
ह क्षीणाइति प्रांततामाह नपुनरिति तृतीयामाहसा
क्षात्कृतं प्रत्यक्षेण निश्चितंमयासंप्रज्ञातावस्थायामे
वनिरोधसमाधिसाध्यंहानं नपुनरस्मात्परंनिश्चेतव्यम
स्तीतिशेषः चतुर्थीमाह भावितो निष्पादितोविवेकख्या
तिरूपोहानोपायोनास्याःपरंभावनीयमस्तीतिशेषः ए
षाचतुष्टयीकार्याविमुक्तिः समाप्तिःकार्यतया प्रलयव्या
ख्यतादर्शिता क्वचित्पाठःकार्यविमुक्तिरिति कार्यान्तरेण॥
विमुक्तिःप्रज्ञाया इत्यर्थः प्रयत्ननिष्पाद्यानुनिष्पादनीया
मप्रयत्नसाध्यांचित्तविमुक्तिमाह चित्तविमुक्तिस्तुत्रयी
प्रथमामाह चरिताधिकारा बुद्धिःकृतभोगापवर्गकार्ये
त्यर्थः द्वितीयामाह गुणाइति प्रांततामाह नचैषामिति
तृतीयामाह एतस्यामवस्थायामिति एतस्यामवस्थायां
जीवन्नेवपुरुषःकुशलोमुक्तइत्युच्यते चरमदेहत्वादित्याह
एतामिति अनौपचारिकंमुक्तमाह प्रतिप्रसवेप्रधान॥
लयेपिचित्तस्यमुक्तःकुशलइत्येवभवतिगुणातीत॥
त्वादिति तदेवंचतुर्व्यूहानुक्रान्तमध्यपतितस्यहा॥

नोपायस्य विवेकख्यातेर्गोदोहनादिवत् प्रागसिद्धेरसि
द्धस्यचोपायत्वाभावात् सिध्युपायान् वक्तुमारभतइ=
त्याह सिद्धेति तत्राभिधास्यमानानां साधनानांयेनप्रका
रेण विवेकख्यात्युपायत्वंतद्दर्शयतिसूत्रेणयोतेः योगांगा
नि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिंक्षिण्वंति पंचपर्व
णोविपर्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपिजात्यायु=
र्भोगहेतुत्वेनाशुद्धिरूपत्वादिति शेषंसुगमं नानाविध
स्यकारणभावस्यदर्शनाद्योगांगानुष्ठानस्यकीदृशंका
रण मित्यतआह योगांगानुष्ठानमिति अशुध्यावियो
जयति बुद्धिसत्वमिति अशुद्धेर्वियोगकारणंदृष्टांतमा
ह यथा परशुरिति परशुः छेद्यंवृक्षंमूलेन वियोजयति
अशुध्यावियोजयद्बुद्धिसत्वं विवेकख्यातिंप्रापयति य
था धर्म्मस्सुखंतथायोगांगानुष्ठानंविवेकख्यातेःप्राप्ति
कारणं नान्येनप्रकारेणेत्याह विवेकख्यातेस्त्विति ना
न्यथेतिप्रतिषेधश्रवणात् पृच्छति कतिचैतानीति उ
त्तरंनवैवेति तानिदर्शयति कारिकया तद्यथाउत्पत्ती
ति अत्रोदाहरणान्याह तत्रोत्पत्तिकारणमिति मनो
विज्ञानमव्यपदेश्यावस्थातोपनीयवर्तमानावस्थामा
पादयदुत्पत्तिकारणंविज्ञानस्य स्थितिकारणंमनसःपु
रुषार्थता अस्मितायाउत्पन्नंमनस्तावदवतिष्ठतेनया
वद्द्विविधंपुरुषार्थमभिनिर्वर्त्तयति अथनिर्वर्त्तितपुरु
षार्थद्वयंस्थितेरपैति तस्मात्स्वकारणादुत्पन्नस्यमनसो

नांगलपुरुषार्थेनास्थितिकारणंदृष्टांतमाह शरीरस्येवे
ति प्रत्यक्षज्ञाननिमित्तमिंद्रियद्वारास्वतोवाविषयस्य
संस्क्रियाभिव्यक्तिः तस्याःकारणंयथारूपस्यालोकःवि
कारकारणंमनसोविषयांतरं यथाहि मृकंडोःसमा=
हितमनसोवल्लकीविपंच्यमानपंचमस्वरश्रवणस
मनंतरमुन्मीलिताक्षस्यस्वरूपलावण्य यौवन स
म्पन्ना मप्सरसंम् प्रम्लोचा भीक्षमाणस्य स
माधिमपहायतस्यांसक्तंमनोबभूवेति अत्रैवनिदर्श
नमाह यथाग्निः पाकस्यतंडुलादेः कठिनावयवस=
न्निवेशस्य प्रशिथिलावयवसंयोगलक्षणस्यविकार=
स्यकारणंसतएवविषयस्यप्रत्ययकारणंधूमज्ञानम=
ग्निज्ञानस्येति ज्ञायतइतिज्ञानं अग्निश्चासौज्ञानंचे=
ति अग्निज्ञानंतस्यएतदुक्तंभवति वर्तमानस्यैवाग्ने
र्ज्ञेयस्यप्रत्ययकारणतयाकारणमितिश्रौत्सर्गिकीनिर
पेक्षाणांकारणानांकार्येक्रियाप्राप्तिस्तस्याःकुतश्चिदप
वादोऽप्राप्तिःयथानिम्नोपसर्पणस्वभावानामपांप्रति
बंधःसेतुनातथेहापि बुद्धिसत्वस्यसुखप्रकाशशील
स्यस्वाभाविकीसुखविवेकख्यातिजनकताप्राप्तिः
साकुतश्चिद्धर्मात्तमसोवाप्रतिबंधान्नभवतिधर्मा
त्योगांगानुष्ठानाद्वातदपनयेतद्प्रतिबद्धवृत्तिस्व
भावतएवतज्जनकतयातदाप्नोतियथावक्ष्यतिनि=
मित्तमप्रयोजकंप्रकृतीनांवरणभेदस्तुततःक्षेत्रिक

घदिति तदेवविवेकख्यातिलक्षणकार्यापेक्षयाप्राप्ति
कारणमुक्तं अनंतरकार्यापेक्षयातुतदेववियोगकार
ण मित्याह वियोगकारणमिति अन्यत्व कारणमाह
अन्यत्व कारणं यथा सुवर्णकारः सुवर्णस्य कटककुं
डल केयूरादिभ्यो भिन्नाभिन्न भेद विवक्षया कटका
दि भिन्नस्य सुवर्ण कुंडलादन्यत्वं तथाच कटककारी
सुवर्णकारः कुंडलादभिन्नात्सुवर्णा दन्यत् कुर्वन्न
न्यत्व कारणं अग्निरपि पाकस्यान्यत्व कारणं यद्यपि
तथापि धर्म्मिणो धर्म्मयोः पुलाक तंडुलत्वयो भेद
विवक्षया धर्म्मयो रुपजनापायेपि धर्म्म्यनुवर्तत इ
ति न तस्यान्यत्वं शक्यं वक्तुमिति विकारमात्र का
रणत्व मुक्तमिति नसंकरः नच संस्थान भेदो धर्म्मिण
णो न्यत्वकारणमितिव्याख्येयं सुवर्णकारइत्यस्यासंग
तेः वाह्यमन्यत्वकारणमुपन्यस्याध्यात्मिकमुदाहर
ति एवमेकस्येति अविद्याकमनीयेयंकन्यकेत्यादिज्ञा
नंसंमोहयोगात् सएवस्त्रीप्रत्ययोमूढोविषण्णोभवति चै
त्रस्यमैत्रस्यपुण्यवतोकलत्ररत्नमेतन्नतुममभाग्यहीन
नस्येति एवंसपत्नीजनस्यतस्यांद्वेषःस्त्रीप्रत्ययस्यदुःख
त्वे एवंमैत्रस्यतस्याःभर्तुःरागस्तस्यैवस्त्रीप्रत्ययस्यसु
खत्वेतत्वज्ञानंत्वङ्मांसमेदोस्थिमज्जासमूहःस्त्रीकायः
स्थानबीजादिभिरशुचिरितिविवेकिनांमध्यस्थ्यवैराग्ये
कारणमिति धृतिकारणंशरीरमिंद्रियाणांविधारकानिंद्रि

याणिचशरीरस्यसामान्याकरणवृत्तिर्हिप्राणाद्यावायवः
पंचतदभावेशरीरपातादेवंमांसादिकार्यागानामपिप
रस्परविधार्यविधारकत्वंएवंमहाभूतानिपृथिव्यादी=
निमनुष्यवरुणसूर्यगंधर्वशशिलोकनिवासिनांश
रीराणांतानिचपरस्परंपृथिव्यांहिगंधरसरूपस्पर्शश=
ब्दगुणायांपंचमहाभूतानिपरस्परंविधार्यविधारक=
भावेनाचस्थितान्यप्सुचत्वारितेजसित्रीणिद्वेचमातरि
श्वनीतितैर्यग्योनमानुष्यदेवादीनिचविधार्यविधारक
भावेनावस्थितानिनन्वाधाराधेयभावरहितानांकुत
स्तत्वमित्यतआह परस्परार्थत्वादितिमनुष्यशरीरंहि
पशुपक्षिमृगसरीसृपस्थावरशरीरोपयोगेन ध्रियते
एवंव्याघ्रादिशरीरमपिमनुष्यपशुमृगादिशरीरोपयो
गेन एवंपशुपक्षिमृगादिशरीरमपिस्थावराद्युपयोगे
नएवंदेवशरीरमपिमनुष्योपहृतछागमृगकपिंजल=
मांसाज्यपुरोडाशसहकारिशाखाप्रस्तरादिभिरिज्यमा
नंतदुपयोगेनएवंदेवतापिवरदानवृष्ट्यादिभिर्मनु=
ष्यादीनिधारयतीत्यस्तिपरस्परार्थत्वमित्यर्थःशेषंसुगमं
संप्रतिन्यूनाधिकसंख्याव्यवच्छेदार्थयोगांगान्यवधार
यति तत्रयोगांगान्यवधार्यतइतियतिवैराग्याभ्यास=
वैराग्यश्रद्धावीर्यादयोपियथायोगमेतेष्वेवस्वरूपतोनां
तरीयकतयाचांतर्भाववयितव्याःयमनियमान्यंगान्युदि
श्ययमनिर्देशकंसूत्रमवतारयति तत्रेतिक्रमाःयोगांग

महिंसामाह सर्वथेति ईदृशीमहिंसांसैवेति उत्तरेचेति
तन्मूलाइत्यहिंसामपरिपाल्यकृताअप्यकृतकल्पाःनि
ष्फलत्वादित्यर्थः तत्सिद्धिपरतयैवानुष्ठानमहिंसाचे
न्मूलमुत्तरेषांकथंतेअहिंसासिद्धिपराइत्यतआह तत्व
तिपादनायेति सिद्धिर्ज्ञानंनोत्पत्तिरित्यर्थः स्यादेतदहिं
साज्ञानार्थायद्युत्तरेकं कृतैरन्यतएवतदवगमादित्यत
आह तदवदातेयद्युत्तरेनानुष्ठीयेरन् अहिंसामलिना
स्यादसत्यादिभिरित्यर्थः अत्रैवागमिकानांसंमतिमाह
तथाचेति सुगमं सत्यलक्षणमाह यथार्थेवाङ्मनसेइति
यथाशब्दंसाकांक्षंपूरयतियथादृष्टमिति प्रतिसंबंधि
नंतथाशब्दंप्रतिक्षिपति तथा वाङ्मनश्च विवक्षायां
कर्तव्यायामिति अन्यथातु नसत्यंएतत्सोपपत्तिकमा
ह परत्रपुरुषे स्वबोधसंक्रांतयेस्वबोधसदृशबोधज
ननायवागुक्तोच्चरिता अतःसापदिनवंचितावंचिका
यथाद्रोणाचार्येणस्वतनायाश्वत्थाममरणमायुष्मन्स
त्यधनाश्वत्थामाहतइतिपृष्टस्ययुधिष्ठिरस्यप्रतिवच
नंहस्तिनमभिसंधायसत्यंहतोअश्वत्थामेतितदिदमु
क्तस्योत्तरंनयुधिष्ठिरस्यस्वबोधंसंक्रामयतिस्वबोधो
ह्यस्यहस्तिहननविषयइंद्रियजन्मानचासौसंक्रांतः
किंत्वन्यएवतस्यतनयवधबोधोजातइतिभ्रांतावाभ्रां
तिजाभ्रांतिश्चविवक्षासमयेवाज्ञेयार्थावधारणसमयेवा
प्रतिपत्यावंध्याप्रतिपत्तिवंध्यायथानार्योप्रतिम्लेच्छभाषा

प्रतिपत्तिवंध्यानिष्प्रयोजनावास्यादितियथाऽनपेक्षिता
भिधानावाक्तत्राहिपरत्रस्वबोधस्यसंक्रांतिरप्यसंक्रां
तिरिवानिष्प्रयोजनत्वादितिएवंलक्षणमपिसत्यंपरोप
कारफलंसत्साभासं नतुसत्यमित्याह एषेति तद्यथास
त्यतपसस्तस्करैःसार्थगमनं पृष्टस्यसार्थगमनाभि-
धानमिति अभिधीयमानोच्चार्यमाणाशेषंसुगमं अभा
वस्यभावाधीननिरूपणतयास्तेयलक्षणमाहस्तेयम
शास्त्रपूर्वकमिति विशेषेणसामान्यंलक्ष्यतइत्यर्थः
मानसव्यापारपूर्वकत्वाद्वाचनिककायिकव्यापारयोः
प्राधान्यात्मनोव्यापारउक्तोऽस्पृहारूपमिति ब्रह्मचर्यस्व
रूपमाहगुप्तेति संयतोपस्थेपिहि स्त्रीप्रेक्षणतदालापकं
दर्पायतननतदंगस्पर्शेनसक्तोनब्रह्मचर्यवानितितन्निं
रासायोक्तंगुप्तेंद्रियस्येति इंद्रियांतराण्यपितत्रलोलुपा
निरक्षणीयानीति अपरिग्रहस्वरूपमाह विषयाणामि
ति तत्रसंगदोषउक्तोभोगाभ्यासमनुविवर्द्धंते रागाःकौ
शलानिचेंद्रियाणामिति हिंसालक्षणश्चदोषोनानुपह
त्यभूतान्युपभोगःसंभवतीति अशास्त्रीयाणामयत्नोप
नतानामपिविषयाणांनिंदितप्रतिग्रहादिरूपार्जनदोष
दर्शनात् शास्त्रीयाणामप्युपार्जितानांचरक्षणादिदोषद
र्शनादस्वीकरणमपरिग्रहःसामान्यतउक्तायादशाःपुन
र्योगिनामुपादेयास्तादृशान्वक्तुंसत्वमवतारयतितेलि
तिजातंसर्वोसुजात्यादिलक्षणासुभूमिषुनिदिताःसार्व

भेमाश्चहिंसादयइत्यन्यत्राप्यवछेदऊहनीयःसुगमं
भाष्यं शौचादिनियममाचष्टे व्याचष्टेशौचमिति आदिश
ब्देनगोमयादयोगृह्यंतेगोमूत्रयावकादिमेध्यंतस्याभ्य
वहरणादिआदिशब्दाद्ग्रासपरिमाणसंख्यानियमादयो
ग्राह्याः मेध्याभ्यवहरणादिजनितमितिवक्तव्येमेध्याभ्य
वहरणादिचेत्युक्तंकार्येकारणोपचारात् चित्तमलाःमद
मानासूयादयस्तदपनयोमनः शौचंप्राणयात्रामात्रहेतोर
भ्यधिकस्यानुपादित्सासंतोषःप्रागेवस्वीकरणपरित्यागादि
तिविशेषःकाष्ठमौनमिंगितेनापिस्वाभिप्रायाप्रकाशनंअ
वचनमाकारमौनंपरिक्षीणवितर्कजालइतिवितर्को
वक्ष्यमाणःसंशयविपर्ययोवेति एतावताशुद्धोभिसंधिरु
क्तः एतेचयमनियमाः विष्णुपुराणेउक्ताः ब्रह्मचर्यमहिं
सांचसत्यास्तेयापरिग्रहान् सेवेतयोगीनिष्कामोयो
ग्यतांस्वमनोनयन् स्वाध्यायशौचसंतोषतपांसिनिय
तात्मवान् कुर्वीतब्रह्मणितथापरस्मिन्प्रवणंमनः ए
तेयमाःसनियमाःपंचपंचप्रकीर्तिताः विशिष्टफलदाः
काम्यानिष्कामानांविमुक्तिदाइतिश्रेयांसिबहुविघ्ना=
नीत्येषामपवादसंभवेतत्प्रतीकारोपदेशपरंसूत्रमव
तारयति एतेषांयमनियमानामिति सूत्रविन वितर्का
णांभाष्येनास्तितिरोहितमिवकिंचनतत्रवितर्काणां
स्वरूपप्रकारकारणधर्मफलभेदान्प्रतिपक्षभावना
विषयान्प्रतिपक्षभावनास्वरूपाभिधित्सयासूत्रेणा

ह त्रिनं व्याचष्टे तत्र हिंसेति प्राणभृद्द्रोहस्यापरिसंख्ये
यत्वान्नियमविकल्पसमुच्चयाः संभविनः हिंसादिपुत
त्राधर्मतः तमःसमुद्रेकेसतिचतुर्विधविपर्ययलक्षण
स्याज्ञानस्याप्युदयवृत्त्यज्ञानफलत्वमप्येतेषामितिदुः
खाज्ञानानंतफलत्वमेवहि प्रतिपक्षभावनं तद्वशादे
भ्योनिवृत्तिरिति तदेवप्रतिपक्षभावनंस्फोरयति वध्य
स्यपश्वादेर्वीर्यंप्रयत्नं कायव्यापारहेतुंप्रथममाक्षिप
तियूपनियोजनेनतेनहिपशोरप्रागल्भ्यंभवतिशेषम
तिस्फुटंउक्तायमनियमास्तदपवादकानांचवितर्का
णांप्रतिपक्षभावनातोहानिरुक्तासंप्रत्यप्रस्तूहंयम
नियमाभ्यासात्तत्सिद्धिपरीक्षासूचकानिचिन्हान्युप
न्यस्यतियत्परिज्ञानाद्योगीतत्रतत्रकृतकृत्यःकर्तव्ये
षुप्रवर्ततेइत्याह यदेति तयोःशाश्वतिकविरोधास्त्र
प्यश्वमहिषमूषकमार्जारादि नकुलादयोपिभगव
तःप्रतिष्ठिताहिंसस्यसन्निधानात्तच्चित्तानुकारिणो
वैरंपरित्यजंतीति सत्वंक्रियासाध्योधर्माधर्मौक्रि
यातत्फलंचस्वर्गनरकादितेएवआश्रयतीत्याश्रय
स्तस्यभावस्तत्वंतदस्यभगवतोवाचोभवतीतिक्रि
याश्रयत्वमाह धार्मिकइतिफलाश्रयत्वमाह स्वर्ग
मिति अमोघाअप्रतिहता अस्तेयप्रतिष्ठायां सर्वरत्नो
पस्थानंसुबोधं ब्रह्मचर्यप्रतिष्ठायांवीर्यलाभः वीर्यंसा
मर्थ्ययस्यलाभादप्रतिघान् अप्रतिघातानगुणान् अ

णिमादीन् उत्कर्षयत्युपचिनोति सिद्धश्च तारादिभिर
ष्टाभिः सिद्धिभिरूहा परनामभिरुपेतो विनेयेषु शिष्ये
षु ज्ञानं योगतदंगविषयमाधातुं समर्थो भवतीति अप
रिग्रहस्थैर्ये जन्मकथंतासंबोधः निकायविशिष्टैर्देहेंद्रि
यादिभिरभिसंबंधो जन्म तस्य कथंता किंप्रकारता त
स्याः संबोधः साक्षात्कारः सप्रकारातींद्रियशांतोदिता
व्यपदेश्यजन्मपरिज्ञानमिति यावत् अतीतं जिज्ञासते
कोऽहमासमिति तस्यैव प्रकारभेदमुत्पादे स्थितौ च जि
ज्ञासते कथमहमासमिति वर्तमानस्य जन्मनः स्वरूपं
जिज्ञासते किंस्विदिति शरीरं भौतिकं किं भूतानां समूह
मात्रमाहोस्वित्संयोगान्यदिति अत्रापि कथंस्विदनुषंजनी
यः कस्त्वस्तु यद्य एव अनागतं जिज्ञासते के भविष्याम इ
ति अत्रापि कथंस्विदित्यनुषंग एवमस्येति पूर्वोऽतो
तः कालः परांतो भविष्यन्मध्ये वर्तमानस्तेषामस्मनो भावः
शरीरादिसंबंधस्तस्मिं जिज्ञासा ततश्च ज्ञानं यो हि यदि
च्छति स तत्करोतीति न्यायात् शौचैः अनेन बाह्यशौचसिद्धि
सूचकं कथितं आंतरशौचसिद्धिसूचकमाह किंचेति सत्त्व
चित्तमलानामाक्षालने चित्तसत्त्वममलं प्रादुर्भवति वैम
ल्यात्तत्सौमनस्यं स्वच्छता स्वच्छं तदेकाग्रं ततो मनस्तंत्राः
णामिंद्रियाणां तज्जयाज्जयस्ततश्चात्मदर्शनयोग्यत्वं बु
द्धिसत्त्वस्य भवतीति संभवः न विद्यते साकुत्तमद्त्यनुत्तमः
यथा चोक्तं ययातिना पुरोर्यौवनमर्प्यपतायादुस्त्यजादु

मैतिभिर्यानजीर्यैति जीर्यं तांतांत्समासन्त्यजन्प्रान्तःसु
खेनैवाभिपूर्यते तदेतद्दर्शयति यच्च कामसुखं लोक
इत्यादिना तपःसिद्धिसूचकमाह कासःअशुद्धिलक्षण
मावरणं तामसमधर्मादि अणिमाद्यामहिमालघिमा
प्राप्तिश्च सुगमं स्वाध्यायसिद्धिसूचकमाह स्वागः सुगमं
सनात् नचवाच्यमीश्वरप्रणिधानादेवचेत् संप्रज्ञात
स्य समाधेरंगिनःसिद्धिः कृतंसप्तभिरंगैरिति ईश्वरप्र=
णिधानसिद्धौ दृष्टा दृष्टावांतरव्यापारेण तेषामुपयो
गात् संप्रज्ञातसिद्धौ च संयोगपृथक्त्वेन दध्नइव क्र=
क्रत्वर्थतापुरुषार्थताच नचैवमनंतरंगता धारणा=
ध्यानसमाधीनां संप्रज्ञातसिद्धौ संप्रज्ञातसमानगोच
रतयांऽगांतरेभ्योऽतद्गोचरेभ्यो स्यांतरंगत्वप्रतीतेरीश्व
रप्रणिधानमपिहीश्वरगोचरं न संप्रज्ञेयगोचरमिति
बहिरंगमिति सर्वमवदातं प्रजानातीति प्रज्ञापदव्यु
त्पत्तिर्दर्शिता उत्तरसूत्रमवतारयति उक्ताः सहसिद्धि=
भिर्यमनियमाः आसनादीनि वक्ष्यामः तत्रं स्थिरंनिश्च
लं यत्सुखं सुखावहं तदासनमिति सूत्रार्थः आस्यतेऽत्र
त्रआस्तेवानेनेत्यासनं तस्य प्रभेदानाह तद्यथेति प
द्मासनं प्रसिद्धं स्थितस्यैकतरः पादो भून्यस्तः एकतर
श्चाकुंचितजानोरुपरिन्यस्तइत्येतद्वीरासनं पादतले
वृषणसमीपेसंपुटीकृत्य तस्योपरिपाणिकच्छपिकां
कुर्यात्तद्भद्रासनं सव्यमाकुंचितं चरणं दक्षिणजंघोर्व

तरेदक्षिणंचाकुंचितंवामजंघोर्वोरंतरेनिक्षिपेदेतत्स्व॥
स्तिकं उपविश्यश्लिष्टांगुलिकौश्लिष्टगुल्फौभूमिश्लिष्टजं
घोरुपादौप्रसार्येद्दंडासनमभ्यसेत् योगपट्टकयोगात्सो
पाश्रयं जानुप्रसारितबाहोःशयनंपर्यंकः क्रौंचनिषद
नादीनिक्रौंचादीनांनिषण्णानांसंस्थानदर्शनात्प्रत्ये
तव्यानिपार्ष्णिपादाग्राभ्यां द्वयोराकुंचितयोरन्योन्यसं
पीडनंसमसंस्थानं येनसंस्थानेनावस्थितस्यस्थैर्यंसु॥
खंसिध्यति तदासनंस्थिरसुखं तत् तत्रभगवतःसूत्रका
रस्यसंमतंतस्यविवरणंयथासुखंचेति आसनस्वरूप॥
मुक्त्वातत्साधनमाह प्रभ्यासांसिद्धिकोहिप्रयत्नः शरी
रधारकोनयोगांगस्योपदेष्टव्यासनस्यकारणंतस्यतत्
कारणत्वेउपदेशवैयर्थ्यात् स्वरसतएवतत्सिद्धेःतस्मा
दुपदेष्टव्यस्यासनस्यायमसाधकोविरोधीचस्वाभा॥
विकःप्रयत्नः तस्यचयादृच्छिकासनहेतुतयासननिय
मोयंहन्तृत्वात् तस्मादुपदिष्टनियमासनमभ्यस्यतास्वा
भाविकप्रयत्नशैथिल्यात्माप्रयत्नआस्थेयोनान्यथोप
दिष्टमासनंसिध्यतीतिस्वाभाविकप्रयत्नशैथिल्यमास
नसिद्धिहेतुः अनंतेवानागनायकेस्थिरतरफणासहस्र
विधृतविश्वंभरामंडलेसमापन्नंचित्तमासनंनिर्वर्तय॥
तीति ४७॥ आसनविजयसूचकमाह ततःनिगदव्याख्या
तंभाष्यं आसनमप्युक्तंविष्णुपुराणे एवंभद्रासनादीनां
समास्थायगुणैर्युतमिति आसनानंतरंतत्सूचकतां॥

प्राणायामस्य दर्शयन् तल्लक्षणमाह तमः रेचकपूरककुं
भकेष्वस्ति श्वासप्रश्वासयोर्गतिविच्छेद इति प्राणाया
मसामान्यलक्षणमेतदिति तथाहि यत्र बाह्योवायुराच
म्यांतर्धार्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः
एवं कुंभकेपीति तदेतद्भाष्येणोच्यते सत्यासनेति प्राणा
यामविशेषत्रयलक्षणपरं सूत्रमवतारयति सत्विति बा
ह्यः वृत्तिशब्दः प्रत्येकं संबध्यते रेचकमाह यत्र प्रश्वासे
ति पूरकमाह यत्र श्वासेति कुंभकमाह तत्तोयइति तदे
वस्फुटयति यत्रोभयोः श्वासप्रश्वासयोः सकृद्देवविधा
रकात्प्रयत्नाद्भावो भवति न पुनः पूर्ववदापूरणप्रय
त्नोघप्रविधारकप्रयत्नेनापि रेचकप्रयत्नौघनिधारणप्र
यत्नोपेक्ष्यते किंतु यथा तप्तेउपले निहितं जलं परिशुष्यत्स
र्वतः संकोचमापद्यते एवमयमपि मारुतोवहनशीलोब
लवद्विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मभूतो
वतिष्ठते न तु पूरयति येन पूरकः न तु रेचयति येन रेच
कइति इयानस्य देशो विजयः प्रादेशवितस्तिहस्तादि
परिमितो निवातेप्रदेशे ईषीकातूलादिक्रियानुमितोवा
ह्यएवमांतरोप्या पादतलमामस्तकं पिपीलिकास्पर्शस
दृशेनानुमितः स्पर्शेन निमेषक्रियावच्छिन्नस्य कालस्य
चतुर्थोभागः क्षणस्तेषामियत्तावधारणेनावच्छिन्नः स्वजा
नुमंडलं पाणिना त्रिः परामृश्य छोटिकावच्छिन्नः कालोमा
त्राताभिष्षड्त्रिंशन्मात्राभिः परिमितः प्रथम उद्घातोमं

दः सएवद्विगुणीकृतोद्वितीयोमध्यमः सएवत्रिगुणीकृ=
तस्तृतीयस्तीव्रस्तमिमं संख्यापरिदृष्टंप्राणायाममाह
संख्याभिरिति स्वस्थस्यपुंसःश्वासप्रश्वासक्रियावछि
न्नेनकालेनयथोक्तछोटिकाकालःसमानःप्रथमोघात=
कर्मतानीतः उद्घातोविजितोवशीकृतोनिगृहीतःक्ष
णानामियत्ताकालोविवक्षितः श्वासप्रश्वासेयत्तासंख्येति
कथंचिद्द्वेदःखल्वयंप्रत्यहमभ्यस्तोदिवसपक्षमासा
दिक्रमेणदेशकालप्रचयव्यापितयादीर्घःपरमनैपुण
समधिगमनीयतयाचसूक्ष्मोनतुमंदतया एवंत्रयोवि=
शेषालक्षिताः चतुर्थंलक्षयतिवार्थः व्याचष्टे देशकालसं
ख्याभिरितिआक्षिप्तोऽभ्यासवशीकृतादूपादवरोपितः
सोपि दीर्घसूक्ष्म एव तसृ्नेकोबाह्याभ्यंतरविषयप्रा=
णायामोदेशकालसंख्यादर्शनपूर्वकः नचासौचतुर्थस्तृ
तीयइवसकृत्प्रयत्नादन्हायजायते किंत्वभ्यस्यमानस्तां
तामवस्थामापन्नः तत्तदवस्थाविजयानुक्रमेणभवती=
त्याह भूमिजयादिति ननुभयोर्गत्यभावस्तंभवृत्तावप्य=
स्तीतिकोस्मादस्यविशेषइत्यतआह तृतीयइति अनालो
चनपूर्वकःसकृत्प्रयत्ननिर्वर्तितस्तृतीयः चतुर्थस्त्वालोच
नपूर्वोबहुप्रयत्ननिर्वर्तनीयइतिशेषः तयोःपूरकरेचक
योर्विषयोनालोचितोयं तु देशकालसंख्याभिरालोचितइ
त्यर्थः प्राणायामस्यावांतरप्रयोजनमाह ततःक्षीयतेने
न बुद्धिसत्वप्रकाशइत्यावरणंक्लेशाःपाप्मानव्याचष्टे प्रा

णाध्यमानिति ज्ञायतेनेनेतिज्ञानंबुद्धिसत्त्वप्रकाशः विवेक
स्यज्ञानंविवेकज्ञानं विवेकज्ञानमावृणोतीतिविवेकज्ञा
नावरणीयंभव्यगेयप्रवचनीयादीनांकर्तरिनिपातनस्य
प्रदर्शनार्थत्वात् कोपनीयरंजनीयवत् अत्रापिकर्तरि
कृत्यप्रत्ययः कर्मशब्देनतज्जन्यमपुण्यं तत्कारणंक्लेशंल
क्षयति अत्रैवागमिनामनुमतिमाह यत्तदाचक्षतइ
ति महादेवोरागः तदविनिर्भागवर्तिन्यविद्यापितद्ग्र
हणेनगृह्यते अकार्येमधर्मः ननुप्राणायामएवचेत
पाप्मानंक्षिणोति कृतंतर्हितपसेत्यतआह दुर्बलंभ
वतीति ननु सर्वथाक्षीयतेअतस्तत्क्षयायतपोपे
क्ष्यतइति अत्राप्यागमिनामनुमतिमाह तथाचोक्त
मिति मनुरप्याह प्राणायामैर्दहेद्दोषानिति प्राणाया
मस्ययोगांगता विष्णुपुराणोक्ता प्राणाख्यमनिलंवश्य
मभ्यासात्कुरुतेतुयः प्राणायामःसविज्ञेयःसबीजोनी
जएवच परस्परेणाभिभवंप्राणापानौयदानिलौ कु
रुतस्तद्विधानेन तृतीयंसंयमात्तयोरिति किंचधासः
प्राणायामोहिमनः स्थिरीकुर्वन् धारणासुयोग्यंकरो
ति तदेवंयमादिभिः संस्कृतः सयमाय प्रत्याहारमार
भंत तस्यलक्षणसूत्रमवतारयितुंपृच्छति अथेतिस्वरः
चित्तमपिमोहनीयरंजनीयकोपनीयैः शब्दादिभिः वि
षयैर्नसंप्रयुज्यतेतदसंप्रयोगाच्चक्षुरादीन्यपिनसंप्रयु
ज्यंतइति सोयमिंद्रियाणांचित्तस्वरूपानुकारः यत्पुन

स्तत्वं चित्तमभिनिविशतेन तत्रेंद्रियाणांबाह्यविषया
णांमनुकारोपि अतउक्तमनुकारइति स्वविषयासंप्र
योगस्यसाधारणस्यधर्मस्यच्चितानुकारनिमित्तत्वं स
सम्यादर्शयति स्वेति अनुकारंविवृणोति चित्तनिरोधइ
ति द्वयोर्निरोधहेतुश्चप्रयत्नस्तुल्यइतिसादृश्यं अत्रैवदृ
ष्टांतमाह यथामधुकरराजमिति दार्ष्टांतिकेयोजयति
तथेति अत्रापि विष्णुपुराणवाक्यं शब्दादिष्वनुषक्तानि
निगृह्याक्षाणियोगवित् कुर्याच्चित्तानुकारीणिप्रत्याहा
रपरायणः तस्यप्रयोजनंतत्रैवदर्शितं वश्यतापरमातेन
जायतेनिश्चलात्मनां इंद्रियाणामवश्यैस्तैर्नयोगीयोग
साधकइति अस्यानुवादकंसूत्रं ततः ननुसंति किमन्
न्या अपरमा इंद्रियाणांवश्यताया अपेक्ष्यपरमेयमुच्य
ते अद्दालादर्शयति शब्दादिष्विति एतदेवविवृणोति
सक्तीरागोव्यसनं कृयाव्युस्त्या व्यस्यति क्षिपतिनिर
स्यस्येनंश्रेयसइति तदभावोऽव्यसनंवश्यता अपराम
पिवश्यतामाह अविरुद्धाऽनुसाद्यनिरुद्धशब्दादिसेवनं
तद्विरुद्धेषप्रवृत्तिःसैवन्याय्यान्यायादनपेतायतः अ
परामपिवश्यतामाह शब्दादिसंप्रयोगइति शब्दादि
ष्विंद्रियाणां संप्रयोगः स्वेच्छयाभोग्येषु खल्वयंस्वतंत्रोन
भोग्यतंत्रइत्यर्थः अपरामपिवश्यतामाह रागद्वेषाभावे
सुखदुःखशून्यंमाध्यस्थ्येन शब्दादिज्ञानं इत्येकेसूत्र
काराभिमतां वश्यतांपरमर्षिसंमतामाह चित्तस्यैका

ग्यात्सहेंद्रियैरप्रवृत्तिरेवशब्दादिष्वितिजैगीषव्यः अ स्याःपरमतामाह परमात्त्विति तुशब्दोवश्यतांतरेभ्यो विशिनष्टि वश्यतांतराणिहि विषयाशी विषसंप्रयोगः शालितयाक्लेशविषसंपर्कशंकांनापक्रामंति नहिवि षविद्यावित् प्रकृष्टोपिवशीकृतभुजंगमोभुजंगमं केनिधायस्वपितिविस्रब्धः इयंतु वश्यताविदूरीकृ तनिखिलविषयव्यतिषंगानिराशंकतया परमेत्युच्यते नेतरेंद्रियजयवदिति यथायतमानसंज्ञायामेकेंद्रिय जयेपींद्रियम् जयाय प्रयत्नांतरमपेक्षंतेनचैवंचित्तनि रोधेबाह्येंद्रियनिरोधायप्रयत्नांतरापेक्षेत्यर्थः क्रियायो गंजगौक्लेशान्विपाकान् कर्मणामिहतत् दुःखत्वंतथा व्यूहान्पादेयोगस्यपंचकमिति वाचस्पतिमिश्रविरचि तायांपातंजलभाष्यव्याख्यायांसाधननिर्देशोनामद्वितीयःपादः २॥ ॥प्रथमद्वितीयपादाभ्यांसमाधिस्तत्साध नंचोक्तं तृतीयपादेतत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयोवक्तव्याः ताश्चसंयमसाध्याः संयमश्चधारणा ध्यानसमाधिसमुदायइतिविभूतिसाधनतया पंचभ्य श्चयोगांगेभ्योबहिरंगेभ्योस्यांगत्रयस्यांतरंगतयाविशे षज्ञापनार्थमत्रत्रयस्योपन्यासः तत्रापिचधारणाध्यानः समाधीनांकार्यकारणभावेननियतपौर्वापर्यत्वात्तदनुरो धेनोपन्यासेक्रमइतिप्रथमधारणालक्षणीयेत्याह उक्ता नीतिदेश्रणाध्यात्मिकदेशमाह नाभिचक्रइतिआदि

शब्देनतास्वादयो ग्राह्याः बंधःसंबंधः बाह्यदेशमाह बाह्ये इति बाह्येच नस्वरूपेणचित्तस्यसंबंधः संभवतीत्युक्तं वृत्तिमात्रेण ज्ञानमात्रेणेति अत्रापिपुराणं प्राणायामेनपवनंप्रत्याहारेण चेंद्रियंवशीकृत्यततःकुर्याच्चित्तस्थानंशुभाश्रये शुभाश्रयाबाह्याहिरण्यगर्भवासप्रजापतिप्रभृतयः इदंच तंत्रोक्तंमूर्त्तेभगवतोरूपंसर्वोपाश्रयनिःस्पृहं एषावैधारणाज्ञेयायच्चित्त तत्रधार्यते तच्चमूर्त्तंहरेरूपंयद्विचिंत्यंनराधिप ततश्रूयतामनाधाराधारणानोपपद्यते प्रसन्नवदनंचारुपद्मपत्रनिभेक्षणं सुकपोलंसुविस्तीर्ण ललाटफलकोज्वलं समकर्णांतविन्यस्तचारुकुंडलभूषणं कंबुग्रीवंसुविस्तीर्णश्रीवत्सांकितवक्षसं वलीत्रिभंगिनामग्ननाभिनाचोदरेणच प्रलंबाष्टभुजंविष्णुमथवापिचतुर्भुजं समस्थितोरुजंघंचस्वस्तिकांघ्रिकरांबुजं चिंतयेद्ब्रह्मभूतंतंपीतनिर्मलवाससं किरीटचारुकेयूरकटकादिविभूषितं शार्ङ्गचक्रगदाखड्गशंखाक्षवलयांचितं चिंतयेत्तन्मयोयोगीसमाधायात्ममानसं तावद्यावद्दृढीभूतातत्रैवनृपधारणा एतद्तिष्ठतोन्यद्वास्वेच्छयाकर्मकुर्वतः नापयातियदाचित्तंसिद्धांमन्येततातदेति धारणासाध्यंध्यानंलक्षयति तत्रेएकतानताएकाग्रता सुगमंभाष्यं अत्रापिपुराणम् तद्रूपप्रत्ययैकाग्र्यसंततिश्चान्यनिस्पृहा तद्ध्यानंप्रथमैरंगैःषड्भिर्निष्पाद्यतेनृपेति ध्यानसाध्यंसमाधिंलक्षयति तदेवेति व्याच

च्दे ध्यानमेवेति ध्येयाकारनिर्भासमिति ध्येयाकारस्य
निर्भासो नध्यानाकारस्येति अतएवाह शून्यमिति ननु
शून्यंचेत्कथंध्येयं प्रकाशेतेत्याह इवेति अत्रैव हेतु
माह ध्येयस्वभावावेशादिति अत्रापिपुराणं तस्यैवक
ल्पनाहीनंस्वरूपग्रहणंहियत् मनसाध्याननिष्पाद्यं स
माधिःसोभिधीयतइति ध्येयात् ध्यानस्यभेदः कल्पना
तद्धीनं इत्यर्थः अष्टांगयोगमुक्त्वा खांडिक्यायकेशिध्वज
उपसंजहार क्षेत्रज्ञः करणीज्ञानंकरणं तदचेतनं निष्पा
द्यमुक्तिकार्येवैकृतकृत्यं निवर्ततेइति धारणाध्यानस
माधिरित्येतत् त्रयस्यतत्रतत्रनियुज्यमानस्यप्रातिस्वि
कसंज्ञोच्चारणे गौरवंस्यादितिलाघवार्थंपरिभाषासूत्रम
वतारयति त्रमःव्याचष्टे एकविषयाणीति वाचकत्वशं
कामपनयति तद्स्येति तंत्रेतेष्वुसाद्यते योगा येन
पशास्त्रेण तत्तंत्रं तद्वातांत्रिकीसंयमप्रदेशाःपरिणा
मत्रयसंयमादित्येवमादयःसंयमंविजयस्याभ्याससा
धनंस्यफलमाह तत्कःप्रसयानरानभिभूतस्यनिर्मलेप्र
वाहेवस्थानमालोकःप्रज्ञायाःसुगमंभाष्यम् क्वपुनर्वि
नियुक्तस्यसंयमस्यफलमेतदित्यतआह तगःभूमिं
विशेषयतिभाष्यकारःतस्येति जितायाभूमेःयानंतरा
भूमिरवस्थाअजितातत्रविनियोगःस्यात्तविषये सवि
तर्केसमाधौवशीकृते संयमेनसंयमस्याविजितेनिर्वि
तर्केविनियोगःतस्मिन्नपि वशीकृतेसविचारेविनियो

गः एव निर्विचारे विनियोग इत्यर्थः अतएव स्थूलविषय
समापत्तिसिद्धौ सत्यां पुराणे तदायुधभूषणापनयेन सू
क्ष्मविषयः समाधिरवताशितः ततः शंखगदाचक्रशा
र्ङ्गादिरहितं बुधः चिंतयेद्भगवद्रूपं प्रशांतं साक्षसूत्रकं
यदावधारणा तस्मिन्नवस्थानवतीततः किरीटकेयूरमु
खैर्भूषणैरहितं स्मरेत् तदैकावयवं देवं सोहं चेति पुनः
र्बुधः कुर्यात्ततो ह्यहमिति प्रणिधानपरो भवेदिति ॥ क
स्मात्पुनरधरां भूमिं विजित्योत्तरां विजयते विपर्ययः क
स्मान्न भवतीत्यत आह नह्यजिताधरभूमिरिति न हि शि
लाद्रदात् गंगां प्रति प्रस्थितो प्राप्य मेघवनं गंगां प्राप्नोति
ईश्वरप्रसादाज्जितोत्तरभूमिकस्य चेति कस्मादेतदागमतः
सामान्यतोवगतानामप्यवांतरभूमिभेदानां कुतः पौर्वाप
र्योवगतिरित्यत आह भूमेरस्या इति जितः पूर्वो योग उत्त
रस्य योगस्य ज्ञानप्रवृत्त्यधिगमहेतुः अवस्थैवावस्थाव
नित्यभिप्रेत्यैतत् द्रष्टव्यम् कस्मात्पुनर्योगांगत्वाविशेषे
पि संयमस्य तत्र तत्र विनियोगो नेतरेषां पंचानामित्यत
आह त्रयः तदिदं साधनत्रयं साध्यसमानविषयत्वेनांत
रंगं न त्वेवं यमादयस्तस्मात्ते बहिरंगा इत्यर्थः साधनत्रयस्य
स्य संप्रज्ञात एवांतरंगत्वं न त्वसंप्रज्ञाते तस्य निर्बीजतया
तैः सह समानविषयत्वाभावात् तेषु चिरनिरुद्धेषु संप्र
ज्ञात परमकाष्ठा परनामज्ञानप्रसादरूप परवैराग्यानं
तरमुत्पादात्तदित्याह तदपि तस्य समानविषयत्वमंतरंगत्व

प्रयोजकत्वमिह न तु तदनन्तरभावस्तस्यैव हि रंगेश्वरप्रणि
धानवर्त्तितया सव्यभिचारत्वादिति स्थिते सव्यभिचारम
पंतरंगलक्षणतदनन्तरभावित्वमस्य नास्ति तस्माद्रूपेता
तरंगतासंयमस्यासंप्रज्ञात इति दर्शयितुं तदभावे भावा
दित्युक्तं परिणामत्रयं संयमादित्यत्रोपयोक्ष्यमाणपरिणा
मत्रयं प्रतिपिपादयिषुर्निर्बीजप्रसंगेन प्रस्तुति अथेति व्यु
त्थानसंप्रज्ञातयोश्चित्तस्य स्फुटतरपरिणामभेदप्रचयानु
भवान्न प्रश्नावतारो निरोधे तु नानुभूयते परिणामो न चान
नुभूयमानो नास्ति चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्ष
णमपि अपरिणामस्यासंभवादित्यर्थः प्रश्नोत्तरं सूत्रं व्यु
त्थाननिरोधपरिणामः असंप्रज्ञातं समाधिमपेक्ष्य संप्रज्ञ
ातो व्युत्थानं निरुध्यते तेनेति निरोधो ज्ञानप्रसादः परं वै
राग्यं तयोर्व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ तत्र
व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्याविर्भावश्चि
त्तस्य धर्मिणो निरोधक्षणस्य निरोधावसरस्य द्वयोरवस्था
योरन्वयः न हि चित्तं धर्मि संप्रज्ञातावस्थायामसंप्रज्ञाता
वस्थायां च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यते
इति ननु यथोत्तरे क्लेशा अविद्यामूला अविद्यानिवृत्तौ
निवर्त्तते इति तन्निवृत्तौ न पृथक् प्रयत्नान्तरमास्थीयते एवं
व्युत्थानप्रत्ययमूलाः संस्कारा व्युत्थाननिवृत्तावेव निवर्त्तते
इति तन्निवृत्तौ न निरोधसंस्कारोपेक्षितव्य इत्यत आह व्यु
त्थानसंस्कारा इति न कारणमात्रनिवृत्तिः कार्यनिवृत्तिहेतु

तुर्भभूत् कुविंदनिवृत्तावपिपटस्यनिवृत्तिरपितुयत्कार
णात्मकंयत्कार्यतत्कारणनिवृत्तौतत्कार्यनिवृत्तिः उत्त
रेत्वक्लेशास्रनियात्मानइत्युक्तंअतस्तन्निवृत्तौतेषांनि
वृत्तिरुपपन्नाइत्येवंप्रत्ययात्मानःसंस्काराश्चिरनिरु
द्धेप्रत्ययेसंप्रतिस्मरणादर्शनात्तस्मात्प्रत्ययनिवृत्तावपि
तन्निवृत्तौनिरोधसंस्कारप्रचयएवोपासनीयइत्यर्थः
सुगममन्यत् सर्वथाव्युत्थानसंस्काराभिभवेतुबलव
तानिरोधसंस्कारेणचित्तस्यकीदृशःपरिणामइत्यआह
तस्यात् व्युत्थानसंस्कारमलरहितनिरोधसंस्कारपरंपरा
मात्रवाहिताप्रशांतवाहिता तस्मात्पुनःसंस्कारपाटव
मपेक्षतेनतुसंस्कारमात्रमित्यतआह तत्संस्कारमांद्यइ
तितदिति निरोधंपरामृशति येतुनाभिभूयइतिपठंति तेः
तदाव्युत्थानंपरामृशंति संप्रज्ञातसमाधिपरिणामाव
स्थांचित्तस्यदर्शयन्तिस्मः विक्षिप्तता सर्वार्थता सत्त्वावि
नश्यतीतिक्षयस्तिरोभावःनासदुत्पद्यतइति उदयआवि
र्भावःआत्मभूतयोः सर्वार्थतैकाग्रतयोर्धर्मयोः योअपा
योपजनौ सर्वार्थतायाअपायः एकाग्रतायाउपजनस्त
योरनुगतंचित्तंसमाधीयते पूर्वापरीभूतसाध्यमानसमा
धिविशेषणंभवतीति तमः पुनस्समाधेः पूर्वापरीभूतायाः
अवस्थायास्समाधिनिष्पत्तौसत्यां शांतोदितावतीतवर्त्तमा
नौ तुल्यौअन्तौप्रत्ययौचेति तुल्यप्रत्यययोएकाग्रतायांतुद्व
योःसादृश्यं समाहितचित्तस्येति समाधिनिष्पत्तिर्दर्शिता

तथैवैकाग्रमेव अवधिमाह आसमाधिभ्रेषात् भ्रंशादिति प्रासंगिकंच वक्ष्यमाणोपयिकंच भूतेंद्रिय परिणामं विभजते एताः आचष्टे एतेनेति ननु चित्तपरिणतिमात्रमुक्तं ननु तत्प्रकारा धर्मलक्षणावस्थापरिणामास्तत्कथं तेषामतिदेश इत्यतआह तत्र व्युत्थाननिरोधयोरितिधर्मलक्षणावस्थाशब्दाः परेणोच्चारिताः ननुधर्मलक्षणावस्थापरिणामानोक्तादितिसंक्षेपार्थः तथाहि व्युत्थाननिरोध संस्कारयोरित्यत्रैवसूत्रे धर्मपरिणामउक्तः इमंच धर्मपरिणामं दर्शयतातेनैव धर्मोधिकरणो लक्षणपरिणामोपि सूचितएवेत्याह लक्षणपरिणाम इति लक्ष्यते अनेनेति लक्षणं कालभेदः तेन हिलक्षितं वस्तुवस्त्वंतरेभ्यः कालांतरयुक्तेभ्योव्यवच्छिद्यत इति निरोधस्त्रिलक्षणः अस्यैव व्याख्यानं त्रिभिरध्वभिर्युक्तः अध्वशब्दः कालवचनः स खल्वनागतलक्षणमध्वानंप्रथमंहित्वा तत्किमध्ववत् धर्मत्वमप्यतिपततिनेत्याह धर्मत्वमनतिक्रांतोवर्तमानं लक्षणंप्रतिपन्नः यएवनिरोधोऽनागतआसीत् सएव सम्प्रतिवर्तमानोनतु निरोधोऽनिरोधइत्यर्थः वर्तमानतास्वरूपव्याख्यानं यत्रास्यस्वरूपेण स्वोचितार्थक्रियाकारिणास्वरूपेणाभिव्यक्तः समुदाचारः एषोस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वास्यादेतत् अनागतमध्वानं हित्वाचेद्वर्तमानतामापन्नस्ताच हित्वा अतीततामापत्स्यनिहतमोरध्वनासुसाद्विनाशोस्यातांनचेष्येतेनह्यसत उ

सादेनापिसतोविनाशइत्यतआह नचातीतानागताभ्या सामान्यात्मनावस्थिताभ्यांवियुक्तइति अनागतस्यनि रोधस्यवर्तमानतालक्षणं दर्शयित्वावर्तमानव्युत्थान स्यातीततांतृतीयमध्वानमाह तथाव्युत्थानमितितत्किंनि रोधएवानागतोनव्युत्थानंनेत्याह एवंपुनर्व्युत्थानमिति व्युत्थानजात्यपेक्षयापुनर्भावः नव्यक्त्यपेक्षया नह्यतीतं पुनर्भवतीति स्वरूपाभिव्यक्तिरर्थक्रियाक्षमस्याविर्भा वः सचैवंलक्षणपरिणामउक्तः तज्जातीयेषु पौनःपुन्ये नवर्ततइत्यतआह एवंपुनरिति धर्मपरिणामसूचित मेवावस्थापरिणाममाह तथेति धर्माणांवर्त्तमानाध्वनां बलवत्त्वाबलवत्त्वेवस्थातस्याःप्रतिक्षणं तारतम्यंपरिणा मः उपसंहरति एषइति परिणामभेदानां संबंधिभेदा न्निर्धारयति तत्रानुभवानुसारात् धर्मिणइति तत्किमेष परिणामोगुणानांकादाचित्कोनेत्याह एवमिति कस्मा त्पुन रयंपरिणामःसदातनइत्यतआह चलंचेतिचोदे त्यर्थः तत्प्रचारः एतदेवकुतइत्यतआह गुणस्वाभाव्य मिति उक्तमत्रैव पुरस्तात् सोयंत्रिविधोपि चित्तपरिणा मोभूतेंद्रियेषुसूत्रकारेणनिर्दिष्टइत्याह एतेनेति एषध र्मधर्मिभेदोधर्मधर्मिणोर्भेदमालक्ष्य तत्रभूतानांपृथिव्या दीनांधर्मिणांगवादिर्घटादिर्वा धर्मपरिणामःधर्माणां चातीतानागतवर्तमानत्वंतालक्षणपरिणामः वर्तमा नलक्षणापन्नस्यगवादेर्बाल्यकौमारयौवनवार्धक्यमः

वस्थापरिणामोघटादीनामपि नवपुरातनतावस्थापः
रिणामः एवमिंद्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोच
नंधर्म्मेपरिणामोधर्मेस्यवर्त्तमानतादिलक्षणपरिणामोवर्त्त
मानलक्षणस्य रत्नाद्यालोचनस्यस्फुटत्वास्फुटत्वादिर
वस्थापरिणामः सोयमेवंविधोभूतेंद्रिय परिणामोधर्मि
णोधर्मलक्षणावस्थानांभेदमाश्रित्य वेदितव्यः अभेदमाः
श्रित्याह परमार्थतस्त्विति तुशब्दोभेदपक्षाद्विशिनष्टि
पारमार्थिकत्वमस्यज्ञाप्यते नत्वन्यस्यपरिणामस्य निषि
ध्यते कस्माद्धर्मिस्वरूपमात्रोहीति ननुयदिधर्मिविक्रि
येव धर्मः कथमसंकरप्रत्ययोलोकेपरिणामेष्वित्यत आ
ह धर्मद्वारेति धर्मिशब्देन धर्मलक्षणावस्थाःपरिगृह्यंते
तद्द्वारेणधर्मिणएव विक्रियेत्येकाचासंकीर्णाच तद्द्वा
राणामभेदेपि धर्मिणःपरस्परासंकरात् ननुधर्मोणांधः
र्मिणामभिन्नत्वेधर्मिणोध्वनांच भेदेधर्मिणोनान्यत्वेन
धर्मेणापीत्यतआहधर्मिवद्भवितव्यमित्यतआह तत्र धर्मस्ये
तिभावःसंस्थानभेदः सुवर्णादेर्यथाभाजनस्यरुचकस्व
स्तिकव्यपदेशभेदोभवति तन्मात्रमन्यथाभवति नतुद्र
व्यं सुवर्णमसुवर्णतामुपैति अत्यंतभेदाभावादिति व
क्ष्यमाणोभिसंधिः एकांतवादिनंबौद्धमुत्थापयति अपर
आहेत्ति धर्मापवहि रुचकादयस्तथासन्तः परमार्थसं
तो नपुनःसुवर्णनामकिंचिदेकमनेकेष्वनुगतंद्रव्यमि
ति यदिपुनर्निवर्त्तमानेष्वपिधर्मेषुद्रव्यमनुगतंभवेन्न

तोनचितिशक्तिवत्परिणमेत अपितु कौटस्थ्येनैव परि
वर्त्तेत परिणामात्मकरूपं परिहाय रूपांतरेण कौटस्थ्ये
न परिवर्त्तनं परिवृत्तिः यथा चितिशक्तिरन्यथान्यथाभावं
भजमानेष्वपि गुणेषु स्वरूपादप्रच्युता कूटस्थनित्यैवं स्व
र्णादपि स्यान्न चेष्यते तस्मान्न द्रव्यमतिरिक्तं धर्मेभ्य
इति परिहरति अयमदोष इति कस्मादेकांतानभ्युपग
मात् यदि चितिशक्तिरिव द्रव्यस्यैकांतिकीं नित्यतामभ्यु
पगच्छेम तत एवमुपालभ्येमहि तत्त्वैकांतिकीं नित्यता=
मातिष्ठामहे किंतु न देतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्ते
रर्थक्रियाकारिणो रूपादपैति कस्मान्नित्यत्वप्रतिषेधा
त् प्रमाणेन यदि हि घटो व्यक्तेर्नापेयात् कपालशर्करा–
चूर्णादिष्ववस्थास्वपि व्यक्तो घट इति पूर्ववदुपलब्ध्य
र्थक्रिये कुर्यात्तस्मादनित्यं त्रैलोक्यं अस्तु तर्ह्यनित्यमेवो
पलब्ध्यर्थक्रियारहितत्वेन गगनारविंदवदिति तुच्छत्वादि
त्यत आह अपेतमप्यस्ति नास्यं न तुच्छतायै नैकांततोऽनि
त्यं स्यादित्यर्थः तस्माद्विनाशप्रतिषेधात् प्रमाणेन तथा हि
यत्तुच्छं न तत्कदाचिदप्युपलब्ध्यर्थक्रिये करोति यथा
गगनारविंदं करोति चैतत् त्रैलोक्यं कदाचिदुपलब्ध्य
र्थक्रिये इति तथोत्पत्तिमद्द्रव्यत्वधर्मलक्षणावस्थायो
गित्वात् सोऽप्यत्यंत तुच्छं गगनन लिनन रविषाणादि=
व्यावृत्ताः सत्वहेतव उदाहार्योः तथा च नात्यंतनित्यो
पि न चितिशक्तिवत् कूटस्थनित्यः स्यात् किंतु कथंचि

नित्या तथाच परिणामीति सिद्धं एतेन मृत्पिंडाद्यवस्था-
सु कार्याणां घटादीनामनागतानां सत्वं वेदितव्यं स्यादे-
तदपेतमपि चेदस्ति कस्मात्पूर्वं नोपलभ्यत इत्यत आ-
ह संसर्गोऽस्य कारणलयात् सौक्ष्म्यं दर्शनानर्हत्वं तत्र
अनुपलब्धिरिति तदेवं धर्मे परिणामं समर्थ्य लक्षण परि
णाममपि लक्षणानां परस्परानुगमनेन समर्थयते लक्षण
परिणाम इति एकैकं लक्षणं लक्षणांतराभ्यां समनुगतमि
त्यर्थः नन्वेक लक्षणयोगे लक्षणांतरेणानुभूयेते तत्कथं त-
द्योग इत्यत आह यथा पुरुष इति नह्यनुभवाभावः प्रमा
ण सिद्धमपलपति तदुत्पादएव तत्र तत् सद्भावे प्रमाण
मसत उत्पादासंभवात् नरविषाणवदिति परोक्तं दोषमु-
त्थापयति अत्र लक्षण परिणाम इति यदा धर्मो वर्त्तमानस्त
दैव यद्यतीतोनागतश्च तदा त्रयोप्यध्वानः संकीर्येरन् अ
नुक्रमेण च अध्वनां भावे असदुत्पादप्रसंग इति भावः परिह
रति तस्य परिहार इति वर्त्तमानत्वेवहि धर्माणामनुभवसि
द्धत्वं ततः प्राक् पश्चात् कालसंबंधमवगमयति न खल्वसदुत्प
द्यते नच सद्विनश्यति तदिदमाह एवं हि नचित्तमिति क्रो
धान्तरकाले हि चित्तं राग धर्मकमनुभूयते यद्यन्वराग क्रो
धसमये ऽनागतत्वेन नासीत्तत्कथमसावुत्पद्येत अनुत्प
न्नश्च कथमनुभूयेतेति भवत्वेवं तथापि कुतोऽध्वनामसं
कर इति पृच्छति किंचेति किं कारणमसंकरे च पुनरर्थे उ
क्तमाह त्रयाणां लक्षणानां युगपन्नास्ति संभवः कस्मिन्नेत्र

कस्यांचित्तवृत्तौक्रमेणतुलक्षणानांएकतमस्य स्वव्यंजकांजनस्यभावोभवेत्संभवेत् लक्ष्याधीननिरूपणतयांलक्षणानांलक्ष्याकारेण तद्वृत्ता अत्रैवपंचशिखाचार्यसंमतिमाह उक्तंचेति एतच्चप्रागेवव्याख्यातं उपसंहरतितस्मादिति आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गोद्संकरोध्वनामिति दृष्टांतमाह यथारागस्येति पूर्वेक्तोधस्यरागसंबंधावगमोदृशितइति इदानींतुविषयांतरवर्त्तिनोरागस्यविषयांतरवर्त्तिना रागांतरेणसंबंधावगमइति दार्ष्टांतिकमाह तथालक्षणस्येति ननुसत्यप्यनेकांताभ्युपगमेभेदोस्तीति धर्मलक्षणावस्थान्यत्वे तदभिन्नस्यधर्मिणोप्यन्यत्वप्रसंगः सएवच नेष्यतेतस्नुगमानुभवविरोधादित्यतआह नधर्मीत्रध्वायतस्तदभिन्नाधर्मास्त्र्यध्वानः धर्माणामध्वत्रययोगमेवस्फोरयति तेलक्षिता अभिव्यक्तावर्त्तमानाइतियावत् अलक्षिताअनभिव्यक्ता अनागता अतीताइतियावत् तत्रलक्षितास्तांतामवस्थांबलवत्वदुर्बलत्वादिकांप्राप्नुवंतऽन्यत्वेननिर्दिश्यंते अवस्थांतरतोनद्रव्यांतरतः अवस्थाशब्देन धर्मलक्षणावस्थाउच्यंते एतदुक्तंभवत्यनुभवएवहिधर्मिणोधर्मादीनांभेदाभेदौ व्यवस्थापयति नह्येकांतिकेऽभेदे धर्मादीनांधर्मिणोधर्मिरूपवद्धर्मादित्वं नाप्येकांतिकेभेदेगवाश्ववद्धर्मादित्वं सचानुभवोनैकांतिकत्वमवस्थापयन्नपि धर्मादिरूपजनापायधर्मके

पि धर्मिणमेकमनुगमयन् धर्मांश्च परस्परतो व्यावर्त्तय
न् प्रत्यात्म मनुभूयतइति तदनुसारिणोवयंनतम
तिवर्त्यस्वेच्छयाधर्मानुभवान् व्यवस्थापयितुमीश्महइ
ति अत्रैव लौकिकं दृष्टांतमाह यथैकारेखेति यथात
द्वेव रेखास्वरूपं तत्तस्थानापेक्षयाशतादित्वेन व्यप
दिश्यते एवैतदेव धर्मिरूपं तत्तद्धर्मलक्षणावस्था
भेदेनान्यत्वेनप्रतिनिर्दिश्यतेइत्यर्थः दार्ष्टांतिकार्थे
दृष्टांतांतरमाह यथाचैकत्वेपीति अत्रांतरेपरोक्तं
दोषमुत्थापयति अवस्थेति अवस्थापरिणामे धर्म
लक्षणावस्थापरिणामे कौटस्थ्यदोषप्रसंगउक्तोऽत्र
धर्मिधर्मलक्षणावस्थानां एवमिति कथमितिउत्तरं
अध्वनोव्यापारेणेति दध्नः किलयऽनागताध्वा ॥ त
स्यव्यापारः क्षीरस्यवर्त्तमानत्वंतेनव्यवहितत्वाद्धे
तोः यदा धर्मोदधिलक्षणः स्वव्यापारंदाधिकाद्यारभं
क्षीरेसन्नपिनकरोति तदानागतः यदाकरोति तदा
नागतः यदाकरोति तदावर्त्तमानः यदाकृत्वानिवृत्तः
सन्नेव स्वव्यापारात्त दाधिकाद्यारम्भात्तदातीतइति
एवंत्रैकाल्येपिसत्वाद्धर्मधर्मिणोर्लक्षणानामवस्था
नांचकौटस्थ्यंप्राप्नोति सर्वदासत्ताहिनित्यत्वं चतुर्णा
मपिच सर्वदासत्वेऽसत्वेवा नोत्पादः तावन्मात्रंच लक्ष
णंकूटस्थनित्यतायाः नहिचितिशक्तेरपि कूटस्थनि
त्यतायाःकश्चिदन्योविशेषइतिभावःपरिहरन्ति नासो

दोषः कस्मात् गुणिनित्यत्वेपिगुणानांविमर्दोऽन्योन्या
भिभाव्याभिभावकत्वंतस्यवैचित्र्यात् एतदुक्तंभवति
यद्यपिसर्वेदासत्वं चतुर्णामपिगुणिगुणानांतथापिगु
णविमर्दवैचित्र्येणतदात्मभूततद्विकाराविर्भावति
रोभावभेदेनपरिणामशालितयानकौटस्थ्यंचितिश
क्तेस्तुनस्वात्मभूतविकाराविर्भावतिरोभावइतिक
कौटस्थ्यंयथाहुः नित्यंतमाहुर्विद्वांसोयस्वभावोन
नश्यतीतिविमर्दवैचित्र्यमेवविकारवैचित्र्येहेतुंप्र
कृतौविकृतौचदर्शयति यथासंस्थानंपृथिव्यादिपरि
णामलक्षणमादिमद्धर्ममात्रंविनाशितिरोभाविशब्दा
दीनांशब्दस्पर्शरूपरसगंधतन्मात्राणांस्वकार्यमपे
क्ष्याविनाशिनामतितिरोभाविनाम् प्रकृतौदर्शयति ए
वंलिंगमिति तस्मिन्विकारसंज्ञा नत्वेवंविकारवती
चितिशक्तिरितिभावः तदेवंपरीक्षकसिद्धांविकृतिं
प्रकृतिंचोदाहृत्य विकृतावेवलोकसिद्धायांगुणवि
मर्दवैचित्र्यंधर्मलक्षणावस्थापरिणामवैचित्र्यहेतु
मुदाहरति तत्रेदमुदाहरणमिति नचायंनियमोल
क्षणानामेवावस्थापरिणामइतिसर्वेषामेवधर्मल
क्षणावस्थाभेदानामवस्थाशब्दवाच्यत्वादेकएवा
वस्थापरिणामस्सर्वसाधारणइत्याह धर्मिणोपी
ति व्यापकंपरिणामलक्षणमाह अवस्थितस्येति
धर्मशब्दआश्रितत्वेनधर्मलक्षणावस्थावाचकः

यस्यैषत्रिविधः परिणामस्तंधर्मिणंसूत्रेणलक्षयति त
त्रशांतोदिताव्यपदेश्यधर्मानुपातीधर्मी धर्मोस्यास्ती
तिधर्मीति नाविज्ञातेधर्मेसशक्योज्ञातुमितिधर्मंद
र्शयति योग्यतेति धर्मिणोद्रव्यस्यमृदादेःशक्तिरेवः
चूर्णपिंडघटाद्युत्पत्तिशक्तिरेवधर्मःतेषां तत्राव्यक्त
त्वेनभावइतियावत्॥नन्वेवमव्यक्ततयासंतस्तेप्रादुः
र्भवंतुउदकाहरणादयस्तुतैःस्वकारणादनासादिताःकु
तःप्रासादयत उक्तंयोग्यतावच्छिन्नेति यासौघटादीनां
मुत्पत्तिशक्तिः सोदकाहरणादियोग्यतावच्छिन्नात्तेनोद
काहरणादयोघटादिभिःस्वकारणादेवप्रासादइतिनाक
स्मिकादतिभावः अथवाकेधर्मिणइत्यत्रोत्तरंयोग्यताव
च्छिन्नाधर्मिणइतिकोधर्मइत्यत्रोत्तरंशक्तिरेवधर्मस्तेषां
योग्यतैवधर्मइत्यर्थः अतस्तद्वान्धर्मीतिसिद्धंभवति
तस्तद्भावेप्रमाणमाह सचफलप्रसवभेदानुमितएकः
स्यधर्मिणोन्यश्चान्यश्चचूर्णपिंडघटादिरूपइत्यर्थः का
र्यभेददर्शनाच्चभिन्नइतियावत् परिदृष्टउपलब्धः न
त्रानुभवारोहिणोवर्तमानस्यमृत्पिंडस्यशांताव्यपदे
श्याभ्यांमृच्चूर्णमृद्घटाभ्यांभेदमाह तत्रवर्तमानइति
यदिनभिद्येतपिंडवच्चूर्णघटयोरपितद्वदेवस्वव्यापा
रव्याप्तिप्रसंगइतिभावः अव्यक्तस्यतुपिंडस्यनोक्तंभे
दसाधनंसंभवतिइत्याह यदात्विति कोसौकेनभेदसा
धनेनभिद्येत तदेवंधर्माणांभेदसाधनमभिधायतंभे

दं विभजते तत्रयेखल्विति उदिताइतिवर्त्तमानाइत्यर्थः अध्वनांपौर्वापर्यंनिगमयति तेचेतिचोदयति किमर्थमिति किंनिमित्तमतीतस्यानंतरानंभवंतिवर्त्तमानाः हेतुमाह पूर्वपश्चिमताया अभावात् विषयेण विषयिणीमनुपलब्धिंसूचयति उपलंभमेवोपलभवैधर्म्येणदर्शयतियथावर्त्तमानाऽनागतयोरिति उपसंहरति तत्तस्मादनागतएवसमनंतरः पूर्वत्वेनभवतिवर्त्तमानस्यातीतः अतीतस्यवर्तमानः पूर्वत्वेनसमनंतरो नाव्यपदेश्यः तस्माद्ध्वनायविशेषोतीतइतिसिद्धं स्यादेतदनुभूयमानावनुभूततया उदितातीतोशक्यावुन्नेतुमव्यपदेश्यास्तुपुनर्धर्माअव्यपदेश्यतयैवशक्यानोन्नेतुमित्याशयवानृच्छति अथाव्यपदेश्याः केकेषुसमीस्यामहे अत्रोत्तरमाह सर्वंसर्वात्मकमिति यत्रोक्तमिति एतदेवोपपादयति जलभूम्योरिति जलस्यहि रसरूपस्पर्शशब्दवतोभूमेश्च गंधरसरूपस्पर्शवत्साःपारिणामिकंवनस्पतिलतागुल्मादिषुमूलफलप्रसवपल्लवादिगतरसादिवैश्वरूप्यं दृष्टंसोयमनेवमात्मिकायाम्भूसेरनीदृशस्यवाजलस्यनपरिणामोभवितुमर्हति उपपादितंहिनासदुत्पद्यत इतितथा स्थावराणांपारिणामिकं जंगमेषुमनुष्यपशुमृगादिषुरसादिवैचित्र्यंदृष्टं उपयुंजानाहितेफलादीनिरूपादिभेदसंपदमासादयंति एवंजंगमानांपारिणामिकंस्थावरेषुदृ

ज्ञातेति क्रतुः किमेकस्य धर्मिण एक एव धर्मलक्षणाव-
स्थालक्षणः परिणामः उत बहवो धर्मलक्षणावस्थाल-
क्षणाः परिणामास्तत्र किं प्राप्तं एकत्वाद्धर्मिण एक एव प
रिणामः नहि एकरूपात् कारणात् कार्यभेदो भवितुमर्ह
ति तस्याकस्मिकत्वप्रसंगादिति एवं प्राप्त उच्यते क्रमा-
न्यत्वात् परिणामान्यत्वं एकस्यामृदश्चूर्णपिंडघटकपा
लकणाकारा परिणति परंपराक्रमवती लौकिकपरीक्ष
कैरध्यक्षं समीक्ष्यते अन्यच्चेदं चूर्णपिंडयोरानंतर्यमन्य
च्च पिंडघटयो रन्यच्च घटकपालयोरेकत्र परस्यान्यत्र पू
र्वत्वात् सोयं क्रमभेदः परिणामे एकस्मिन्नवकल्पमानः
परिणामभेदमापादयति एकोपि च मृद्धर्मी क्रमोपनि
पातिततत्तत्सहकारिसमवधानक्रमेण क्रमवती परि
णामपरंपरामुद्वहन्नैनामाकस्मिकयतीति भावः धर्म
परिणामान्यत्ववत् लक्षणपरिणामान्यत्वे वस्थापरि-
णामान्यत्वे च समानं क्रमान्यत्वं हेतुरिति लदेतद्भाष्ये-
णावद्योत्यते एकस्य धर्मिण इति क्रमक्रमवतोरभेदमा
स्थाय सतस्य क्रम इत्युक्तं तथावस्थापरिणामक्रम इति
तथा हि कीनाशीन कोष्ठागारे प्रयत्नसंरक्षिता अपि हि व्री
हयो हायनैरतिबहुभिः पाणिस्पर्शमात्रविशीर्यमाणाव
यवसंस्थानाः परमाणुभावमनुभवंतो दृश्यंते न चायम
भिनवानामकस्मादेव प्रादुर्भवितुमर्हतीति तस्मात्क्षणप
रंपराक्रमेण सूक्ष्मसूक्ष्मतरसूक्ष्मतमबृहद्बृहत्तमादिक्र

मेणप्राप्तेषु निशिष्टोयंलक्ष्यतइति तदिदंक्रमान्यत्वं धर्मे
धर्मिभेदमपेक्ष्यतएवेत्याह तएतइति आविकारेभ्यः
आचलिंगादापेक्षिकोधर्मधर्मिभावोस्मदादेरपितः
न्मात्रापेक्ष्ययाधर्मत्वादित्याह धर्मोपीति यदापरमार्थ
धर्मिण्यलिंगेऽभेदोपचारप्रयोगस्तद्वारेणसामानाधि
करण्यद्वारेणधर्म्येवधर्मइतियावत् तदैकएवपरि
णामोधर्मिपरिणामएवेत्यर्थः धर्मलक्षणावस्थानांधर्
मिस्वरूपाभिनिवेशात् तदनेनधर्मिणोदूरोत्सारितं
कूटस्थनित्यत्वमुक्तप्रायंधर्मपरिणामंप्रतिपादयन्
प्रसंगेनचित्तधर्माणांप्रकारभेदमाह चित्तस्येति परि
दृष्टाःप्रत्यक्षाःअपरिदृष्टाःपरोक्षाः तत्रप्रत्ययात्मकाःप्र
माणादयोरागादयश्च वस्तुमात्राइत्यप्रकाशरूपता
माह स्यादेतदपरिदृष्टाश्चेन्नसंत्येवेत्यतआह अनुमा
नेनप्रापितोवस्तुमात्रेणसद्भावोयेषांतेतथोक्ताःपश्चा
न्मानसाधर्म्यादागमोप्यनुमानम् सप्तापरिदृष्टान्कारि
कयासंगृह्णाति निरोधेति निरोधोवृत्तीनांमसंप्रज्ञाता
वस्था चित्तस्यागमतःसंस्कारशेषभावोनुमानतश्च
समधिगम्यते धर्मग्रहणेनपुण्यापुण्येउपलक्षयति
कचित्कर्मेतिपाठस्तत्रापितज्जनितेपुण्यापुण्येएव
गृह्यते तेचागमतःसुखदुःखोपभोगदर्शनाच्चानुमा
नतोगम्येते संस्कारस्तुस्मृतेरनुमीयते एवंत्रिगुणत्वा
च्चित्तस्यचलंचगुणवृत्तमितिप्रतिक्षणपरिणामोनुः

मीयते एवं जीवनं प्राणधारणं प्रयत्नभेदोऽसंविदितः
चित्तस्य धर्मः श्वासप्रश्वासाभ्यामनुमीयते एवं चेतसश्चे
ष्टाक्रिया यथा यथा तैस्तैरिंद्रियैः शरीरप्रदेशैर्वा संप्रयुज्यते
सापि तत्संयोगादेवानुमीयते एवं शक्तिरपि उद्भूतानां
कार्याणां सूक्ष्मावस्था चेतसो धर्मः स्थूलकार्यानुभवादे=
वानुमीयत इति अतः परमापादपरिसमाप्तेः संयमवि
षयः तद्वशीकारसूचनी विभूतिश्च वक्तव्या तत्रोक्तप्र
कारं परिणामत्रयमेव तावत्प्रथमं मुपान्त सकल यो
गांगस्य योगिनः संयमविजयतयोपक्षिपति यन्नंन
नु यत्र संयमः तत्रैव साक्षात्कारणं तत्कथं परिणामत्रय
संयमोऽतीतानागतं साक्षात्कारयेदित्यत आह तेन प
रिणामत्रयं साक्षात्क्रियमाणं तेषु परिणामेष्वनुगते ये=
अतीतानागते तद्विषयं ज्ञानं संपादयति परिणामत्रय
साक्षात्कारणमेव तदंतर्भूतातीतानागतसाक्षात्कारणा=
त्मकमिति न विषयभेदः संयमसाक्षात्कारयोरित्यर्थः अ
यमपरः संयमस्य विषय उपक्षिप्यते शनं अत्र वाचक
शब्दमाचिख्यासुः प्रथमं तावद्वाग्व्यापारविषयमाह
तत्र वागिंद्रियं वर्णव्यंजकमष्टस्थानं यथाह अष्टौ
स्थानानि वर्णानामुरः कंठः शिरस्तथा जिह्वामूलं च दंताः
श्च नासिकौष्ठौ च तालु चेति सा वाग्वर्णेष्वेव यथा लोकप्र
तीतिसिद्धेष्वर्थवती न च वाचकइत्यर्थः श्रोत्रव्यापारवि
षयं निरूपयति श्रोत्रं पुनर्ध्वनेरुदानस्य वागिंद्रियामिवा

तिनोयः परिणतिभेदोवर्णात्मातेनाकारेपरिणतंतन्मात्र
विषयंनतुवाचकविषयमित्यर्थः यथालोकप्रतीतिसि
द्धेभ्योवर्णेभ्योवाचकंभिनत्ति पदंपुनर्वाचकंपुनर्ना=
दानुसंहारबुद्धिनिर्ग्राह्यंयथाप्रतीतिसिद्धान्नादाञ्व=
र्णान्प्रत्येकंगृहीत्वाऽनुपश्चाद्यासंहरत्येकत्वमापाद
यति गौरित्येतदेकंपदमितितयापदं गृह्यतेयद्यपिप्रा
च्योपिबुद्धयोवर्णाकारंपदमेवप्रत्येकंगोचरयंतितथा
पिनविशदंप्रथतेचरमेतुविज्ञानेतदतिविशदमिति
नादानुसंहारबुद्धिनिर्ग्राह्यमुक्तं यस्तुवैजात्यादेकपदा
नुभवमविज्ञायवर्णानेववाचकानातिष्ठतेतंप्रत्याह व
र्णाइतितेखल्वमीवर्णाः प्रत्येकंवाच्यविषयांधियमाद
धीरन्नागदंतकादवशिक्यावलंबनंसंहताबाग्रावाणा
इवपिठरधारणं नतावत्प्रथमकल्पः एकस्मादर्थप्रती
तेरनुत्पत्तेरुत्पत्तौवाद्वितीयादीनामनुच्चारणप्रसंगोनि
ष्पादितक्रियेकर्मणिविशेषानाधायिनः साधनस्यसाध
नन्यायातियातात् तस्माद्वितीयः परिशिष्यतेसंभवति=
ह्यग्रावाणांसंहतानांपिठरधारणमेकसमयभावित्वा=
त् वर्णानांतुयौगपद्यासंभवोतः परस्परमनुग्राह्यानुग्रा
हकत्वायोगात्संभूयाविनार्थधियमादधते नेपदरूपमे
कमसंस्पृशजः तादात्म्येनातएवानुपस्थापयंतः आवि
र्भूतास्तिरोभूताश्चयः शलाकाकल्पाः प्रत्येकमपदस्वरू
पाउच्यंतेयदिपुनः पदमेकंतादात्म्येनस्पृशेयुर्वर्णास्त

तेनोक्तदोषप्रसंगइत्याह वर्णः पुनरेकैकः यद्वासासः
वोभिधान शक्तिप्रचित्तःसर्वाभिरभिधानशक्तिभिर्निचि
तोगोगणःगौरंनगइत्यादिषुहिगकारोगोत्वाद्यर्थाभि
धायिषुदृष्टइतितत्तदभिधानशक्तिःएवंसोमशोचिरित्या
दिष्वीश्वराद्यर्थाभिधायिषुपदेषुओवर्णोदृष्टःसोपितः
त्तदभिधानशक्तिःएवंसर्वत्रोहनीयं सचैकैकोवर्णोग
कारादिःसहकारियद्वर्णांतरमोकारादितदेवप्रतियो
गिप्रतिसंबंधियस्यसतथोक्तस्तस्यभावस्तत्वंतस्मादै
श्वरूप्यंनानात्वमिवापन्नोननुनानात्वमापन्नःतस्यत
त्वादेवपूर्वोवर्णोगकारउत्तरेणओकारेणगणादिपदे
भ्योव्यावर्त्योत्तरश्चओकारोगकारेणशोचिरादिपदेभ्यो
व्यावर्त्यविशेषेगोत्ववा वकेगोपदस्फोटेवस्यापितोनु
संहारबुद्धोअयमभिसंधिरर्थप्रत्ययोहिवर्णैर्नियतक्र
मतयापरस्परमसंभवद्भिरशक्यःकर्तुंनचसंस्कारद्वाः
राग्नेयादीनामिवपरमापूर्वेवास्वर्गेवाजनयितव्येनिय
तक्रमाणामपिसाहित्यमर्थबुध्युपजननेवर्णानामिति
सांप्रतंविकल्पासहत्वात् सखल्वयंवर्णानुभवजन्यःसं
स्कारःस्मृतिप्रसवहेतुरन्योवाग्नेयादिजन्यइवापूर्वाः
भिधानोनतावदनंतरःकल्पनागौरवापत्तेःसएवतावद
दृष्टपूर्वःकल्पनीयस्तस्यचक्रमवद्भिर्वर्णानुभवैरेकस्य
जन्यत्वंनसंभवतीतितज्जातीयानेकावांतरसंस्कारकः
ल्पनेतिगौरवं नचैषज्ञापकहेत्वंगमज्ञातस्तदंगतामनु

भवतीतिनखलुसंबंधोर्थप्रत्यायनांगमत्वातोंगतासुपेः
तिस्मृतिफलप्रसवानुमितस्तुसंस्कारःस्वकारणानुभव
निषयनियतोविषयांतरेप्रत्ययमाधातुमुत्सहते अन्य
यास्त्किंचिदेवैकैकमनुभूयसर्वेःसर्वेजानीयादितिन
चप्रत्येकवर्णानुभवजनितसंस्कारपिंडलब्धजन्मस्म
तिदर्पणसमारोहिणोवर्णाःसमधिगतसहभावावाच
कइतिसांप्रतम् क्रमाक्रमविपरीतक्रमानुभूवानांत
त्राविशेषेणार्थधीजननप्रसंगात् नचैतत्स्मरणज्ञानपूर्वानु
भववर्त्तिनींपरापरतांगोचरयितुमर्हतितस्माद्वर्णेभ्योसं
भवन्नर्थप्रत्ययएकपदानुभवमेवस्वनिमित्तंउपकल्प
यति नचैषपदेपिप्रसंगःतद्धिप्रत्येकमेवप्रयत्नभेदभि
न्नाध्वनयोव्यंजयंतःपरस्परविसदृशतत्तसदृव्यंजकध्व
निभिस्तुल्यस्थानकरणनिष्फलाःसदृशाःसंतोन्योन्यविस
दृशैःपदैःपदमेकंसदृशमापादयंतःप्रतियोगिभेदेनतत्त
त्सादृश्यानांभेदात्तदुपधानादेकमपिअनवयवमपिसा
वयवमिवानेकात्मकमिवावभासयंतियथानियतवर्ण
परिमसंस्थानंमुखमेकमपिमणिकृपाणदर्पणादयोवि
भिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयंतिनपरमार्थ
तःसादृश्योपधानभेदकल्पिताभागाएवनिभोगस्यपद
स्यवर्णाःतेनतद्बुद्धिर्वर्णात्मनापदभेदेस्फोटमभेदमेवनि
र्भोगमेवसभेदमिवसभागमिवालंबते अतोगोपदस्फो
टभेदस्यैकस्यगकारभागोगौरादिपदस्फोटसादृश्येनन

निर्द्धारयतिस्वभागिनमित्सौकारेणविशिष्टेनिर्द्धारयस्यैव मोकारोपिभागःशोन्विरादिपदसदृशतयानशक्तोनिर्द्धारयतितंस्वभागिनंगोपदस्फोटमितिगकारेणविशिष्टोनिर्द्धारयतिअसहभाविनामपिचसंस्कारद्वारेणास्ति सहभावइतिविशेष्यविशेषणभावोपपत्तिःनचभिन्न विषयत्वंसंस्कारयोर्भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्चसंस्कारयोरेकविषयत्वात् केवलभागानुभवेनपदमव्यक्तमनुभूयतेअनुसंहारधियातुभागानुभवयोर्निसंस्कारलब्धजन्मनाव्यक्तमितिविशेषःअव्यक्तानुभवाश्चप्राञ्चःसंस्काराधानक्रमेणव्यक्तमनुभवमादधानादृष्टाःयथादूराद्धनस्पतावस्तिप्रत्ययाअव्यक्ताव्यक्तवनस्पतिप्रत्ययहेतवःनचेयंविधावर्णानामर्थप्रत्यायनेसंभविनीनोखलुवर्णाःप्रत्येकमव्यक्तमर्थप्रत्ययमादधत्यतेव्यक्तमितिशक्यंवक्तुंप्रत्यक्षज्ञानएवनियमात् व्यक्ताव्यक्तत्वस्यवर्णाधेयस्त्वर्थप्रत्ययोनप्रत्यक्षःतदेषवर्णेभ्योजायमानःस्फुटएवजायेतनवा जायेतनत्वस्फुटःस्फोटस्यतुध्वनिव्यंग्यस्यप्रत्यक्षस्यसतःस्फुटास्फुटत्वेकल्पेतेइत्यसमानंएवंप्रत्येकवर्णानुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्यनुसंहारबुद्धौसंहतावर्णाएकपदस्फोटभावमापन्नाःप्रयत्नविशेषव्यंग्यतयाप्रयत्नविशेषस्यचनियतक्रमापेक्षयाक्रमस्यान्यत्वेतदभिव्यंजकप्रयत्नविशेषाभावेनत्

द्भिव्यक्त्यभावप्रसंगात् क्रमानुरोधिनोर्थसंकेतेनाव
च्छिन्नाः संकेतावच्छेदमेवलौकिकंसभागपदविषयंद
र्शयंति इयंतोद्वित्रास्त्रिचतुराःपंचषावा एतेसर्वा
भिधानशक्तिपरिवृतागकारौकारविसर्जनीयाः सास्ना
दिमंतमर्थमवद्योतयंति तत्किमिदानींसंकेतानुसारेण
वर्णानामेववाचकत्वंतथाचनपदंनामकिंचिदेकमि
त्यतआह तदेतेषामितिध्वनिनिमित्तःक्रमोध्वनिक्र
मः उपसंहृतोध्वनिक्रमोयेषुतेतथोक्ताः बुद्धानिर्भा
स्यतेप्रकाश्यतइति बुद्धिनिर्भासःसंकेतावच्छिन्नाःस्थूल
दर्शिलोकाशयानुरोधेनगकारौकारविसर्जनीयाद्युप
क्तं गकारादीनामपि तद्भागतया तादात्म्येनवाचक
त्वास्तीत्यनुसारस्त्वेकमेवपदंवाचकमित्यर्थः एतदे
वस्पष्टयति तदेकंपदंलोकबुद्ध्याप्रतीयतइतिसंबंधः
कस्मादेकमित्यतआह एकबुद्धिविषयोगौरित्येकंपद
मित्येकाकारायाबुद्धेर्विषयोयतः तस्मादेकं तस्यव्यंज
कमाह एकप्रयत्नाक्षिप्तमिति रसइतिपदव्यंजकास्य
यत्नादिलक्षणःसरइतिपदव्यंजकःप्रयत्नः सचोपक्र
मतःसरइतिपदव्यक्तिलक्षणफलावच्छिन्नःपूर्वापरीभू
तएकस्तदाक्षिप्तंभागानां सादृश्योपधानभेदकल्पिता
नांपरमार्थसतामभावादभागं अतएवपूर्वापरीभूत
भामाभावादक्रमंननुवर्णाःपूर्वापरीभूतास्तेचास्यभा
गाइतिकथमक्रममभागंचेत्यतआह अवर्णनिस्य

वर्णोभागः किंतुसादृश्योपधानभेदास्पदमेवतेनतेना
कारेणापरमार्थसताप्रथतेनहिमणिकृपाणदर्पणादि
वर्त्तीनिमुखानिमुखस्यपरमार्थसतोऽवयवाइतिबो
द्धमनुसंहारबुद्धौविदितमंसवर्णप्रत्ययस्यव्यापारःसं
स्कारःपूर्ववर्णानुभवजनितसंस्कारःसहितस्तेनोप=
स्थापितंविषयीकृतंवर्णानुभवतत्तत्संस्काराणांचप=
दविषयत्वमुपपादितमधस्तात्स्यादेतदभागमक्रम
मवर्णंचेत्पदंतत्वंकस्मादेवंविधंकदाचिन्नप्रथतेन
हिलाक्षारसावसेकोपधानापादितारुणभावःस्फटि
कमणिस्तदपगमेस्वच्छधवलोनानुभूयतेतस्मात्पार
मार्थिकाएववर्णाइत्यतआह परत्रेति प्रतिपिपादयि
षयावर्णैरेवाभिधीयमानैरुच्चार्यमाणैःश्रूयमाणश्च
श्रोतृभिरनादिर्योयंवाग्व्यवहारोविभक्तवर्णपदनि
बंधनस्तज्जनितावासनासाप्यनादिरेवतदनुविद्धया
तद्वासितयालोकबुद्ध्याविभक्तवर्णरचितपदावगाः
हिन्यासिद्धवत्परमार्थवत्संप्रतिपत्त्यासंवादेनवृद्धानां
पदंप्रतीयतेएतदुक्तंभवति अस्तिकश्चिदुपाधिर्येउप
धेयेनसंयुज्यतेवियुज्यतेच यथालाक्षादिस्तत्रतद्वि=
योगेस्फटिकःस्वाभाविकेनस्वच्छधवलेनरूपेणप्रका
शतइतियुज्यते तत्प्रत्ययस्तुप्रयत्नभेदोपनीतध्वनि
भेदादन्यतोतुल्यादात्तस्यचसदासादृश्यदोषदूषितत
यावर्णात्मनैवप्रत्ययजनकत्वमितिकुतोनिरुपाधिनः

पदस्य यथा यथाहुर्ध्वनयः सदृशात्मानो विपर्यासस्य हे
तवः उपलंभक्रमे तेषां विपर्यासस्य कारणं उपाय=
त्वान्न नियतः पदं दर्शितं दर्शिनां ज्ञानस्यैव च बाधेय लो
के ध्रुवमुपप्लवदिति यतः पदात्मा विभक्तवर्णरूषितः
प्रकाश्यते अतः अतः स्थूलदर्शी लोको वर्णानेव पदम
भिमन्यमानस्तानेव प्रकारभेदभाजोर्थभेदे संकेतय
तीत्याह तस्येति तस्य पदस्याजानत एकस्यापि संके
त बुद्धितः स्थूलदर्शी लोकहितायवर्णात्मा विभागः
विभागमाह एतावतां नन्यूनानामधिकानां वा एवं=
जातीयकोनैरंतर्यक्रमविशेषः अनुसंहार एकबुद्ध्यु
पग्रहः एकस्यार्थस्य गोत्वादेर्वाचक इति ननु यद्येक
स्यार्थस्यायं शब्दो वाचक इति संकेतः हंत भोः शब्दा=
र्थयोर्नैतरेतराध्यासस्तर्हि स्यात् आह संकेतस्त्विति

दिगोचरोनच पदार्थमात्रंतद्गोचरः किंतुवाक्यार्थइतिअ
वाक्यार्थपराएवसर्वेशब्दास्तेनसएवतेषामर्थः अ
तोयत्रापि केवलस्यपदस्य प्रयोगस्तत्रापि पदांतरे
ण संहैकीकृत्यततोर्थोगम्यतेनतुकेवलात्कस्मात्त
न्मात्रस्यासामर्थ्यात् तथाच वाक्यमेव तत्रतत्रवाच
कंनतु पदानितद्भागतयातुतेषामप्यस्तिवाक्यार्थवा
चकशक्तिपदार्थइवपदभागतयावर्णानांतेनयथा व
र्णएकैकःसर्वपदार्थाभिधानशक्तिप्रन्वितएवंपदमप्ये
केकंसर्ववाक्यार्थाभिधानशक्तिप्रन्वितंतदिदमुक्तंस
र्वपदेषुचास्तिवाक्यशक्तिः वृक्षइत्युक्तेअस्तीतिगम्य
तेअध्याहृतास्तिपदसहितं वृक्षइतिपदंवाक्यार्थेव
र्ततइतितद्भागत्वाद्वृक्षपदंतत्रवर्तते कस्मात्पुनरः
स्तीतिगम्यतइत्यतआह नसत्तांपदार्थोव्यभिचरती
ति लोकएवहिपदानामर्थावधारणोपायः सचकेव-
लंपदार्थमस्त्यर्थेनाभिसमस्यसर्वत्रवाक्यार्थीकरोति
सोयमव्यभिचारः सत्तदापदार्थस्य अतएवशब्दवृ-
त्तिविदांव्यवहारोयत्रान्यक्रियापदंनास्तितत्रास्ति
र्भवतिर्वापरःप्रयोक्तव्यइतिक्रियाभेदाव्यभिचारिः
प्रातिपदिकमुक्त्वाक्रियाभेदंकारकाव्यभिचारेणदर्श
यतितथाचपचतीत्युक्तइति पचतीत्युक्तेतिकारक-
मात्रस्यतदन्वययोग्यस्यावगमात् अस्यव्याकत्तिपर
स्तद्भेदानामनुवादः तदेवंभेदएववाक्यार्थइति

तथानपेक्षमपि पदं वाक्यार्थे वर्त्तमानं दृश्यत इति सुत
रामस्ति वाक्यशक्तिः पदानामित्याह दृष्टञ्चेति नच्चैता
वतापि श्रोत्रियादिपदस्य स्वतंत्रस्यैवं विधार्थप्रत्याय
नं नयावदस्त्यादिभिरभिसमासोऽस्य भवति तथाच्चास्मा
पिवाक्यावयवत्वात्कल्पितत्वमेवेति भावः स्यादेतत्प
दानामेव चेद्वाक्यशक्तिः कृतं तर्हि वाक्येन तेभ्य एव तद
वसायादित्यत आह तत्र वाक्य इति उक्तमेतत्न केव
लात्पदात्सदार्थः प्रतिपित्सितः प्रतीयते नयावदेतत्प
दान्तरेणाभिसमस्यत इति तथाच वाक्यात्पदान्यपोद्धृत्य
कल्पितानि वाक्यार्थाच्चापोद्धृत्य तदेकदेशं कारकं वा क्रि
यां वा तत्पदं प्रकृत्यादिविभागकल्पनया व्याकरणीयम
न्वाख्येयं किमर्थं पुनरेतावता क्लेशेनान्वाख्यायत इत्यत
इत्यत आह अन्यथेति घटो भवति भवतिभिक्षां देहि भव
तिनिषतीतिनामाख्यातयोश्च साम्यात् एवमश्वस्त्वञ्च
श्वो यातीति एवमजापयः पिब अजापयः शत्रूनिति नामा
ख्यातसारूप्यादनिर्ज्ञातं नामत्वेनाख्यातत्वेन वा अन्वा
ख्यानाभावेनिष्कृष्यान्ज्ञातं कथं क्रियायां कारके वा व्याक्रि
येत तस्माद्वाक्यात्पदान्यपोद्धृत्याख्यातव्यानि नतु अ
न्वाख्यानादेव पारमार्थिको विभागः पदानामिति तदेवं
शब्दरूपं प्रसाध शब्दार्थप्रत्ययानां संकेतात्पादितसंक
राणामसंकरमाख्यातुमुपक्रमते तेषां शब्दार्थप्रत्ययानां
विभागः तद्यथा श्वेतते प्रासाद इति क्रियार्थः शब्दः स्फुटत

रोद्वत्रपूर्वमपरीभूतायाः क्रियायाः साध्यरूपायाः सिद्धरूपः
क्रियार्थः श्वेत इतिभिन्नः शब्दः यत्रापि शब्दार्थयोः सिद्ध
रूपत्वं तत्राप्यर्थादस्तिशब्दस्यभेद इत्याह श्वेतः प्रासा
द इति कारकार्थः शब्दोभिहितत्वाच्चकारकविभक्तेर
भावः अर्थविभजते क्रियाकारकात्मानदर्थस्तयोः श
ब्दयोरर्थः क्रियात्माकारकात्माच प्रत्ययं विजते प्रत्यय
श्चेतिचशब्देनतदर्थइत्येतत्सदृमत्रानुकृष्यतेतदत्रान्य
पदार्थप्रधानं संबध्यते सएवक्रियाकारकात्मार्थोयस्यस
तथोक्तः नन्वभेदेन प्रतीतेः शब्दार्थप्रत्ययानां संकरः कुतः अवि
भागइत्याशङ्क्यवान्तरव्यतिकरात्दितिउत्तरमाहसोयमित्यभिसंधादितिरा
केतोपाधिरेकाकारप्रत्ययोनतुतात्विकइत्यर्थः संकेतः
स्यनिमित्ततादर्शितासंकेतइतिससम्यापरमार्थमाह यस्तु
श्वेतोर्थइतिअवस्थानञ्चपुराणत्वादयः सहगतः संकीर्णए
वंचप्रविभागसंयमाद्योगिनः सर्वेषां भूतानांपशुमृगसरी
सृपवयःप्रभृतीनांपानिहृतामितत्राप्यव्यक्तंपदंतदर्थः त
प्रत्ययश्चेति तदिदमनुष्यवचनवाच्यप्रत्ययेप्रकृतः संय
मः समानजातीयतयातेष्वपिकृतएवेतितेषांरुतंतद
र्थभेदंतत्प्रत्ययंचयोगीजानातीतिसिद्धंसंनं ज्ञानजाहि
संस्काराः स्मृतेर्हेतवो अविद्यादिसंस्काराअविद्यादीनां
क्लेशानांहेतवः विपाकोजात्यायुर्भोगरूपस्तस्यहेतवोध
र्मोधर्मरूपाः पूर्वेषुभवेष्वभिसंस्कृताः निष्पादिताः स्वका
रणैर्यथासंस्कृतं व्यंजनंकृतमितिगम्यतेपरिणामचेष्टा

निरोधशक्तिजीवनान्येव धर्माश्चित्तस्य तदृष्टपरिदृष्टाश्चि
त्तधर्मास्तेषु श्रुतेष्वनुमितेषु सपरिकरेषु संयमः संस्कारा
णां द्वयेषां साक्षात्क्रियायै समर्थः अस्तु तत्र संयमात्तत्सा
क्षात्कारः पूर्वजातिसाक्षात्कारस्तु कुत इत्यत आह नचदेशे
ति निमित्तं पूर्वशरीरमिंद्रियादि सानुबंधसंस्कारसाक्षा
त्कार एवनांतरीकतया जात्यादिसाक्षात्कारमाक्षिपती
त्यर्थः स्वसंस्कारसंयमं परकीयेष्वतिदिशति परत्राप्येव
मिति अत्र श्रद्धोसादे हेतुमनुभवत आवट्यस्य जैगीष
व्येण संवादमुपन्यस्यति अत्रानुश्रूयत इति महाकल्पः
महासर्गः तनुधर इति निर्माणकायसंपदुक्ता भव्यः शो
भनो विगलितरजस्तमोमल इत्यर्थः प्रधानवशित्वमैश्व
र्यं तेन हि प्रधानं विक्षोभ्य यस्मै यादृशीं कायेंद्रियसंपदं
दित्सति तस्मै तादृशीं दत्ते परकीयानि च कायेंद्रियसहस्रा
णि निर्मायांतरिक्षे दिवि भुवि च यथेष्टं विहरतीति संतो
षो हि तस्मात्प्रयो बुद्धिसत्वस्य प्रशांततावाधर्मः मनं परप्रस
यस्य चित्तमात्रस्य साक्षात्करणादिति यथा संस्कारसाक्षा
त्कारः तदनुबंधपूर्वजन्मसाक्षात्कारमाक्षिपत्येवं परचि
त्तसाक्षात्कारोपि तदालम्बनसाक्षात्कारमाक्षिपेदिति प्रा
प्ते आह नत्वात्सानुबंधसंस्कारविषयोसौ संयमः अयं
तु परिच्छिन्न विषय इत्यभिप्रायः का तम् पंचा-
त्मकः कायः स च रूपवत्तया चाक्षुषो भवति रूपे
ण हि कायश्च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिमनुभवति

तत्रयदारूपे संयमविशेषोयोगिनांक्रियते तदारूपस्य ग्राह्यशक्तीरूपवत्कायप्रत्यक्षताहेतुस्तम्यते तस्माद्ग्रा ह्यशक्तिस्तंभेसस्यंतर्द्धानंयोगिनस्ततःपरकीयचक्षुर्जनि तेनप्रकाशेनज्ञानेनासंप्रयोगश्चक्षुर्ज्ञानाविषयत्वंयो गिनःकायस्येतियावत् तस्मिन्कर्त्तव्येंतर्द्धानंकारणमि त्यर्थः एतेनेतिकायेशब्दस्पर्शरसगंधसंयमात्तद्ग्राह्य शक्तिस्तंभेश्रोत्रत्वग्रसनघ्राणप्रकाशासंप्रयोगेंतर्द्धान मितिसूत्रमूहनीयं सोवा आयुर्विपाकंच कर्मद्विविधं सोपक्रमंनिरुपक्रमंचयत् खल्वेकभविकंकर्मजात्या युर्भोगहेतुस्तदायुर्विपाकं तच्च किंचित्कालानपेक्षमेव भोगदानायप्रस्थितंदत्तबहुभोगमल्पावशिष्टफलंप्रव त्तव्यापारंकेवलंतत्फलस्यसहसाभोक्तुमेकेनशरीरेणा शक्यत्वाद्विलंबनेतदिदंसोपक्रममुपक्रमोव्यापारस्तत्स हितमित्यर्थः तदेवतुदत्तस्तोकफलंतत्कालमपेक्ष्यद नायव्याप्रियमाणंकादाचित्कमंदव्यापारंनिरुपक्रमं एतदेवनिदर्शनाभ्यांविशदयति तत्र यथेति अत्रैवाग्नि

रीतंवासर्वमाहेंद्रजालादिव्यतिरेकेणग्रामनगरादिस्व र्गमभिमन्यते मनुष्यलोकमेवदेवलोकमिति मेति मै त्र्यादिषुसंयमान्मैत्र्यादिवलान्यस्यभवंति तत्र मैत्रीभा वनातोबलंयेनजीवलोकसुखाकरोति ततःसर्वहि तोभवति एवंकरुणाबलात्प्राणिनोदुःखात्दुःखहे तोर्वासमुद्धरति एवंमुदिताबलाज्जीवलोकस्यमाध्य स्थ्यमाधत्तेवक्ष्यमाणोपयिकंभावनाकारणत्वंसमाधे राहभाजनातःसमाधिर्यःसंसंयमःयद्यपिधारणाध्यान समाधित्रयमेवसंयमोनसमाधिमात्रंसमाध्यनंतरंका र्यासादात्समाधेःप्राधान्यात्तत्रसंयमउपचरितःकचि त्भावनासमाधिरितिपाठःतत्रभावनासमाधीसमूहस्य संयमस्यावयवोहेतूभवतःवीर्यप्रयत्नःतेनमैत्र्यादिब लवतःपुंसःसुखितादिषुपरेषांकर्त्तव्येषुप्रयत्नोऽवंध्योभ वतीतिउपेक्षोदासीन्यंन तत्रभावनानापिसुखादिवद्रा व्यंकिंचिदस्तीतिवलीयस्यबल संयमस्तस्यबलंलभते इति प्रनंसूक्ष्मेव्यवहितेविप्रकृष्टेवार्थेसंयमेनविन्यस्य तमधिगच्छति २१भुमात् आध्रुवादितोमेरुपृष्ठान्तरेवम निनसंग्रहश्लोकांतेनसंक्षेपतःसप्तलोकानुपन्यस्यविस्त रेणाह तत्रावीचेरिति घनशब्देनपृथिव्युच्यतेभूमिःस्थान मित्यर्थःएतेमहानरकाःअनेकोपनरकपरिवाराबोद्धव्याः एतानेवनामांतरेणोपसंहरति महेतितस्यसूर्यप्रचाराद्रा त्रिंदिवंलग्नमिवविवर्त्तनेयमेवास्यभागंसूर्यस्त्यजति त

त्रराविर्येमेनभागमलंकरोति तत्रदिनमिति सकलजंबू
द्वीपपरिणाममाह तदेद्योजनशतसहस्रं किंभूतंयोज
नानांशतसहस्रमित्याह सुमेरोर्दिशिदिशितदर्द्धेनपंचा
शतायोजनसहस्रेण व्यूढंसंक्षिप्तं यतोस्यमध्यस्थःसुमेरु
रुःसमुद्राश्चसर्षपराशिलाइतिद्विगुणाद्विगुणाइतिसंबंधःय
थासर्षपराशिर्नव्रीहिराशिरिवोच्छ्रितोनापिभूमिसमस्त
थासमुद्राअपीत्यर्थः विचित्रैःशैलैरवतंसैरिवसहवर्तंते
इतिसविचित्रशैलावतंसाद्वीपास्तदेतत्सर्वं सद्वीपविपि
ननगनगरनीरधिमालावलयंलोकालोकपरिवृतंविश्वं
भराभंडलंब्रह्मांडमध्येव्यूढंसंक्षिप्तं सुप्रतिष्ठितंसंस्थानं
सन्निवेशोयस्यतत्तथोक्तंयेयत्रप्रतिवसंतितत्रतान्दर्श
यति तत्रपाताल्तइति ८२सुमेरोःसंनिवेशमाह सुमेरुरि
तितदेवंभूर्लोकंसप्रकारमुक्त्वासप्रकारमेवांतरिक्षलो
कमाहग्रहेति विक्षेपोव्यापारःस्वर्लोकमादर्शयतिमा
हेंद्रनिवासिनइति देवानकायादेवजातयःषण्णाम
पिदेवनिकायानांरूपोत्कर्षमाह सर्वेसंकल्पसिद्धाइ
ति संकल्पमात्रादेवैषांविषयाउपनमंति वृंदारकाःपू
ज्याःकामभोगिनोमैथुनप्रियाःऔपपादिकदेहाःपित्रोः
संयोगमंतरेणाकस्मादेवदिव्यशरीरमेषांधर्मविशेषा
तिसंस्कृतेभ्योणुभ्योभूतेभ्योभवतीति महर्लोकमाह
महतीति महाभूतवशिनःयद्यदेतेभ्योरोचतेतत्तदेव
महाभूतानिप्रयच्छंति तदित्थात्वमहाभूतानितेननेनसं

स्थानेनावतिष्ठंते ध्यानमात्रतृप्ताःपुष्टाभवंति जनलोक
माह प्रथमइत्युक्तक्रमेण भूतेंद्रियवशिनइति भूतानि
पृथिव्यादीनि इंद्रियाणि श्रोत्रादीनि यथानियोक्तुमि
च्छंति तथैवनियुज्यंते उक्तक्रमापेक्षयाद्वितीयंब्रह्मणस्त
पोलोकमाह द्वितीयइति भूतेंद्रियप्रकृतिवशिनइति
प्रकृतिःपंचतन्मात्राणितद्वशिनः तदिच्छातोतन्मात्रा
ण्येवकार्याकारेणपरिणमंतइत्यागमिकः द्विगुणेतिआ
भास्वरेभ्योद्विगुणायुषोमहाभास्वरास्तेभ्योपिद्विगुणायु
षःसत्यमहाभास्वरादित्यर्थः ऊर्ध्वमितिऊर्ध्वंसत्यलो
के अप्रतिहतज्ञाना आवीचेस्तु प्रभृत्यातपोलोकं सू
क्ष्म व्यवहितादि सर्वंनिजानंतीत्यर्थः तृतीयंब्रह्मणः
सत्यलोकमाह तृतीयइति अकृतेभवनस्यगृहस्य
न्यासेयैस्तेतथोक्ताः आधाराभावादेवस्वप्रतिष्ठाःस्वे
षुशरीरेषुप्रतिष्ठायेषांतेतथोक्ताःप्रधानवशिनस्तदि
च्छातः सत्वरजस्तमांसिप्रवर्तंते यावत्सर्गायुषःतथाच
श्रूयते ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे परस्यांतेकृ
तात्मानःप्रविशंतिपरंपदमिति तदेवंचतुर्णांदेवनिकायानांसा
धारणंधर्मानुक्तानामविशेषग्रहणेनधर्मविशेषानाह तत्रेति
अच्युतानामदेवाःस्थूलविषयध्यानसुखाः तेनतेतृप्यंति शुद्ध
निवासानामदेवाःसूक्ष्मविषयध्यानसुखाःतेनतेतृप्यंति सत्या
भानामदेवाइंद्रियविषयध्यानसुखास्तेनतेतृप्यंति संज्ञासंज्ञिनो
नामदेवाअस्मितामात्रध्यानसुखास्तेनतेतृप्यंति तएते सर्वेसंप्र

ज्ञातसमाधिमुपासते ॥ १८ ॥ अथासंप्रज्ञातसमाधिनिष्ठाः
विदेहप्रकृतिलयाः कस्मान्नलोकमध्येन्यस्यंते इत्यत
आह विदेहप्रकृतिलयास्त्विति बुद्धिवृत्तिमंतो हिद
र्शिनविषयालोकयात्रावहंतो लोकेषुवर्त्तंते नचैवंवि
देहप्रकृतिलयाः सत्यपिसाधिकारत्वइत्यर्थः तदे
तदास्यलोकमाचार्वाचेयोगिनासाक्षात्कारणीयंसू
र्येद्वारेसुषुम्नायांनाड्याम् नचैतावतापि तत्साक्षात्का
रोभवतीत्यतआह एव तावदन्यत्रापिसुषुम्नाया
अन्यत्रापियोगोपाध्यायोपदिष्टेषु यावदिदंसर्वंजग
दृष्टमिति बुद्धिसत्त्वंहि स्वभावतएव विश्वप्रकाशनस
मर्थंतमोमलावृतं यत्रैव रजसोद्घाट्यते तदेवप्रका
शयति सूर्यद्वारसंयमोद्घाटितं भुवनंप्रकाशयति नचै
वमन्यत्रापिप्रसंगस्तत्संयमस्य तावन्मात्रोद्घाटनसा
मर्थ्यादिति सर्वमवदातं तत्रतत्रजिज्ञासायांयोगिन
स्तत्रतत्रसंयमः एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः
स्थैर्यहेतुश्च सूत्रपदैरुपदिष्टो भाष्येणनिगदव्याख्या
तेनव्याख्यात इतिनव्याख्यातः मूर्ध मूर्द्धशब्देन सुषु
म्नानाडीलक्ष्यते तत्र संयमइति प्राग्वे प्रतिभाऊहस्त
द्भवंप्रातिभं प्रसंख्यानहेतु संयमवतोहितत्प्रकर्षे प्रसं
ख्यानोदयपूर्वलिंगं यदूहजंज्ञानंतेनसर्वं विजानाति
योगीतच्च प्रसंख्यानसन्निधापनेन संसारान्तारयती
तितारकं हृविल हृदयपदंव्याचष्टे यदिदमस्मिन्ब्रह्मपु

रेकहत्वादात्मा ब्रह्म तस्य पुरं निलयस्तद्धि तत्र निजानाति स्वमिति दहरगर्त्ते तदेव पुंडरीकं अधोमुखं वेश्मम
नसः चित्तसंवेदनत्वे हेतुमाह तत्र विज्ञानं तत्र संयमाच्चित्तं निजानाति स्ववृत्ति विशिष्टं सन् यत्र प्रकाश
रूपस्यातिस्वच्छस्य नितांताभिभूत रजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्यात्यंतिकश्चैत
न्यात् संकरस्तत्र कैव कथा रजस्तमसोजडस्वभावयो
रित्याशयवान्सत्कारः सत्त्वपुरुषयोरित्युवाच इम
मेवाभिप्रायं गृहीत्वा भाष्यकारोप्याह बुद्धिसत्त्वप्रख्या
शीलमिति न प्रख्याशीलमात्रमपितु विवेकख्यातिरूपे
णपरिणतमतो नितांतशुद्धप्रकाशतयात्यंतसारूप्य
चैतन्येनेति संकर इत्यत आह समानेति सत्त्वेनोपनि
बंधनमविनाभावः संबंधः समानं सत्त्वीयति बंधनं य
योरजस्तमसोस्ते तथोक्ते वशीकारोभिभवः असंकरमा
ह नस्माद्वेति चकारोप्यर्थः नकेवलं रजस्तमोभ्यामि
त्यर्थः परिणामिन इति वैधर्म्यमपरिणामिनः पुरुषा
दुक्तं प्रत्यया विशेषः शांताद्याकारमदरूपापा बुद्धेश्चैतन्य
बिंबोद्ग्राहेण चैतन्यस्य शांताद्याकाराध्यारोपश्चंद्रम
सइव स्वच्छ सलिलप्रतिबिंबितस्य तत्कंपनात् कंपनारोपः भोगहेतुमाह दर्शितविषयत्वादिति असंक
आख्यातं ननु बुद्धिसत्त्वस्तु पुरुषभिन्नं भोगस्तु पुंसः कुतोभिधयते इत्यत आह सभोगप्रत्ययो भोगस्सः प्रस

यःसत्वस्यातःपरार्थत्वाद्दृश्योभोग्यःसत्वंहि परार्थसंह
तत्वात्तद्धर्मेश्चभोगः इति सोपिपरार्थःयस्मैच परस्मा
असैा तस्यभोक्तुर्भोग्यःअथवानुकूलप्रतिकूलवेदनी
यस्तु सुखदुःखानुभावोभोगः नचायमासानमेवानु
कूलयति प्रतिकूलयति वास्वात्मनिवृत्तिविरोधाद्
तोनुकूलनीयप्रतिकूलनीयार्थोभोगःसभोक्ताआत्मा
तस्यदृश्योभोग्यइति यस्तुनस्मात्परार्थोद्विशिष्टइतिपरा
र्थोदितिपंचम्यन्यपदाध्याहारेण व्याख्यातास्यादेतः
त्पुरुषविषयाचेत्सज्ञाहतभोःपुरुषःप्रज्ञायाःप्रज्ञेयइ
ति प्रज्ञांतरमेवतत्र तत्रेतिअनवस्थापातइत्यतआ
ह नचपुरुषप्रत्ययेनेति अयमभिसंधिः चित्याजडःप्र
काश्यते नजडेनचितिःपुरुषप्रत्ययस्त्वचिदात्मा क
थंचिदात्मानंप्रकाशयेत् चिदात्मात्वपराधीनप्रकाशो
जडंप्रकाशयतीतियुक्तम् बुद्धिसत्वेनेति अचिद्रूपता
दात्म्यनजडत्वमाह बुद्धिसत्वगतपुरुषप्रतिबिंबाल
बनात् पुरुषालंबनंनतुपुरुषप्रकाशनात् पुरुषा
लंबनंनतुपुरुषप्रकाशनात् पुरुषालंबनं बुद्धिसत्व
मेवतु तेनप्रत्ययेन संक्रांतपुरुषप्रतिबिंबपुरुष
छायापन्नं चैतन्यमालंबतइतिपुरुषार्थः अत्रैवश्रुति
मुदाहरति तथाह्युक्तमीश्वरेण विज्ञातारमिति नके
नचिदित्यर्थः नचस्वार्थसंयमो नयावत्प्रधानंस्वका
र्यंपुरुषज्ञानमभिनिर्वर्त्तयति तावत्तस्यपुरस्तात्प्रावि

भूतीराधत्तेताःसर्वोदर्शयति तत्ते तदनेनयोगजधर्मो
नुगृहीतानांमनःश्रोत्रत्वक् चक्षुर्जिह्वाघ्राणानांयथा
संख्यंप्रातिज्ञानदिव्यशब्दाद्यपरोक्षहेतुभावउक्तः
श्रोत्रादीनांपंचानांदिव्यशब्दाद्युपलंभकानां तात्रि
काःसंज्ञाः श्रावणाद्याःसुगमंभाष्यंकदाचिदात्मविष
यसंयमप्रवृत्तस्तत्स्वभावात्सूर्यांतरसिद्धीरधिगम्य
कृतार्थमन्यः संयमाद्विरमेदतआह तेयः व्युत्थितचि
त्तेहिताः सिद्धीरभिमन्यतेजन्मदुर्गतद्रवद्रविणक
णिकामपि द्रविणसंभारंयोगिनातु समाहितचित्ते
नोपनताभ्योपिताभ्योविरक्तव्यंआभिसंहिततापत्रया
त्यंतिकोपशमरूपपरमपुरुषार्थःसखल्वयं कथंतस्म
स्यनीकासु सिद्धिषुरज्येतेतिसूत्रभाष्ययोरर्थःतदेवं
ज्ञानरूपमैश्वर्यं पुरुषदर्शनार्थसंयमफलमुक्त्वाक्रि
यारूपमैश्वर्यं संयमफलमाह वंधः समाधिवलादि
ति वंधकारणसंयमवलात् प्राधान्यात्समाधिग्रह
णं प्रचरत्यनेनास्मिन्निति प्रचारः चित्तस्यगमागमा
ध्वानोनाड्यः तस्मिन्प्रचारेसंयमात्तद्वेदनं तस्माच्च
बंधकारणंशैथिल्यात् नतेनप्रतिबध्यते अप्रति
वद्धमयुन्मार्गेणगच्छन् स्वशरीरादप्रत्यूहं निष्क्रा
मति नच परशरीरमाविशति तस्मात्तत्प्रचारोपिज्ञा
तव्यः इंद्रियाणिच चित्तानुसारीणि परशरीरे यथा
धिष्ठाननिविशंतेइति उक्त समस्तेंद्रियवृत्तिर्जीव

नंप्राणादिलक्षणाप्राणादयोलक्षणंयस्याःसातथोक्ताद्वु
यीं द्रियाणांवृत्तिर्बाह्याभ्यंतरीचवाह्यारूपाद्यालोचनल
क्षणाअभ्यंतरीतुजीवनंसहिप्रयत्नभेदःशरीरोपग्र
हितमारुतक्रियाभेदहेतुःसर्वकरणसाधारणःयथाहुः
सामान्यकरणवृत्तिःप्राणाद्यावायवः पंचेति तैरस्यल
क्षणीयत्वात् तस्यप्रयत्नस्यक्रियाकार्यं पंचतपो प्राण
आनासिकाग्रादाचहृदयादवस्थितःअसितपीताहार
परिणतिमिदंरसंतत्रतत्रस्थानेसममनुरूपंनयन्समा
नःआहृदयादाचनाभेरस्यस्थानं मूत्रपुरीषपुरीष
गर्भादीनामपनयनहेतुरपानःआनाभेराचपादतलाद
स्यवृत्तिः उन्नयनादूर्ध्वं नयनाद्रसादीनामुदानःआ
नासिकाग्रात्आचशिरसोवृत्तिरस्यव्यापीव्यानःएषा
मुक्तानांप्रधानंप्राणस्तदुत्क्रमेसर्वोत्क्रमश्रुतेःप्राणमु
त्क्रामंतमनुसर्वेप्राणाउत्क्रामंतीतिनदेवंप्राणादी
नांक्रियास्थानभेदेनभेदंप्रतिपाद्यसूत्रार्थमवतारयति
उदानजयादिति उदानेकृतसंयमस्तज्जयाज्जलादि
भिर्नप्रतिहन्यते उत्क्रांतिश्चार्चिरादिमार्गेणभवतिप्रया
णकालेतस्मात्तामुत्क्रांतिं वशित्वेनप्रतिपद्यते प्राणादि
संयमात्तद्विजयेभूतजयएताःक्रियाःस्थानविजयादि
भेदात्प्रतिपत्तव्याःसनं तेजसःशारीरस्योपध्मानमुत्तेज
नंस्वार्थेसंयमादन्वान्वयंशिष्टंश्रावणाद्युक्तंसंप्रतिश्राव
णाद्यर्थोदेवसंयमाच्छ्रावणादिभवतीत्याहश्रोत्रसंयमः

चपृथिव्यांगंधवर्जंचत्वारोप्सुगंधरसवर्जं त्रयस्तेजसि
गंधरसरूपवर्जं द्वौनभस्वतिशब्दएवाकाशेतएतईदृ
शाविशेषाः सद्गाकारादिभिर्धर्मैः स्थूलशब्देनपरिभा
षिताःशास्त्रे तत्रापि पार्थिवास्तावद्धर्माःआकारोगौर
वंरौक्ष्यंवरणं स्थैर्यमेवचवृत्तिर्भेदः क्षमाकार्ष्ण्यंकाठि
न्यं सर्वभोग्यता अपांधर्माःस्नेहःसौक्ष्म्यं प्रभाशौक्ल्य
मार्दवं गौरवंचयत्शैत्यरक्षापवित्रत्वं संधानंचौदका
गुणाः तैजसाधर्माः ऊर्ध्वभाक् पाचकं दग्धृपावकंल
घुभास्वरप्रध्वंस्योजस्विवैतेजःपूर्वाभ्यांभिन्नलक्षणंवा
यवीयाधर्माः तिर्यग्गानं पवित्रत्वमाक्षेपोनोदनंबलं
बलमव्यक्ततारौक्ष्यंवायोर्धर्माःपृथग्विधाःआकाशी-
याधर्माः सर्वतोगतिरव्यूहो विष्टंभश्चेतिच त्रयःआका
शधर्मा व्याख्याता पूर्वधर्मविलक्षणादिति तएतआ
कारप्रभृतयोधर्मास्तैः सहेति आकारश्च सामान्य वि
शेषोगोत्वादिः द्वितीयंरूपमाह द्वितीयंरूपं स्वसामा-
न्यंमूर्तिःसांसिद्धिकंकाठिन्यं स्नेहोजलं भक्त्यापुष्टिव
लाधानहेतुः वह्निरुष्णता औदर्यसौर्यं भौमंच सर्व-
त्रैव तेजसि समवेतोष्णतेति सर्वत्रैतद्धर्मधर्मिणोर
भेदविवक्षयाभिधानंवायुः प्राणामीवहनशीलः त-
दाहचलनेन तृणादीनां शरीरस्यापटनेनचसर्वगंवायुसा
मान्यं नामित्वमनुमीयते सर्वतोगतिराकाशःसर्वत्रश
ब्दोपलब्धिदर्शनात् श्रोत्राश्रयाकाशगुणेनहिशब्देन

ह्नीयं कानं कायाकाशसंबंधसंयमा त्तूलघुनिवा-
त्तूलादौ कृतसंयमापत्तिं चेतसस्तत्स्थ तदंजनतां
चेति सिद्धिक्रममाह जलद्रिति अपरमपि परशरीरा
वेशहेतुसंयमं क्लेशकर्मविपाकक्षयहेतुमाह वयः
विदेहमात्रमाह शरीरादिति अकल्पितायामहावि
देहायाथउपाय स्तत्सदर्शनायकल्पितां विदेहमाह
साप्यदीति वृत्तिमात्रकल्पनाज्ज्ञानमात्रं तेन महावि
देहामाह यात्विति उपायोपेयते कल्पिताकल्पितयो
राह तत्रेति किंपरशरीरावेशमात्रमितोनेत्याह तत
श्चेति ततोधारणातोमहाविदेहायामनःप्रवृत्तेः सि
द्धिः क्लेशश्चकर्मच ताभ्यांविपाकत्रयं जात्यायुर्भोगाः
तदेतद्रजस्तमोमूलंविगलित रजस्तमसः सत्वमात्रा
त् विवेकख्यातिमात्रसमुत्पादात्तदेतद्विपाकत्रयंर-
जस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति त
त् क्षयाच्च निरावरणंयोगिचित्तंयथेच्छं विहरति वि-
जानातिचेति स्थूयः स्थूलंच स्वरूपंच सूक्ष्मंचान्वयश्चा
र्थवत्त्वंचेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषुसं
यमात्तज्जयः स्थूलमाह तत्रेति पार्थिवाःपाथसीयास्तै
जसा वायवीयाश्चाकाशीयाः शब्दस्पर्शरूपरसगंधाः-
यथासंभवंविशेषाः षड्जगांधारादयः शीतोष्णादयोनी
लपीतादयःकषायमधुरादयःसुरभ्यादयःएतेह्विनाम
रूपप्रयोजनैः परस्परतोभिद्यतइतिविशेषाः एतेषांप

चपृथिव्यांगंधवर्जंचत्वारोप्सुगंधरसवर्जं त्रयस्तेजसि
गंधरसरूपवर्जं द्वौनभस्वतिशब्दएवाकाशतएतइंद्र
शाविशेषाः सद्धाकारादिभिर्धर्मैः स्थूलशब्देनपरिभा
षिताःशास्त्रे तत्रापि पार्थिवास्तावद्धर्माःआकारोगौर
वंरौक्ष्यंवरणं स्थैर्यमेवत्त्वद्वत्तिर्भेदः क्षमाकार्ष्यंकाठि
न्यंसर्वभोग्यता अपांधर्माः स्नेहःसौक्ष्म्यं प्रभाशौक्ल्य
मार्दवंगौरवंचयत शैत्यरक्षापवित्रत्वं संधानंचौदका
गुणा. तैजसाधर्माः ऊर्ध्वभाक् पाचकं दग्धपाचकंल
घुभास्वरप्रध्वंस्योजस्विवैतेजःपूर्वाभ्यांभिन्नलक्षणंवा
यवीयाधर्माः तिर्यग्ज्ञानं पवित्रत्वमाक्षेपोनोदनंबलं
वलमञ्चयतारौक्ष्यंवायोर्धर्माःपृथग्विधाःआकाशीः
याधर्माः सर्वतोगतिरव्यूहो विष्टंभश्चेतिच त्रयःआका
शधर्मोव्याख्याता पूर्वधर्मविलक्षणादिति तएतआ
कारप्रभृतयोधर्मास्तैःसद्देति आकारश्च सामान्यवि
शेषोगोत्वादिः द्वितीयंरूपमाह द्वितीयंरूपं स्वसामा=
न्यंमूर्त्तिःसांसिद्धिकंकाठिन्यं स्नेहोजलं भज्ञापुष्टिव
लाधानहेतुः वन्हिरुष्णता औदर्यसौर्य भौमेच सर्व=
त्रैव तेजसि समवेतोष्णतेति सर्वत्रैतद्धर्मधर्मिणोर
भेदविवक्षयाभिधानंवायुः प्राणामीवहनशीलः तः
स्साहचलनेन तृणादीनां शरीरस्याटनेनचसर्वगंवायुसा
मान्यनामित्वमनुमीयते सर्वतोगतिराकाशःसर्वत्रश
ब्दोपलब्धिदर्शनात् श्रोत्राश्रयाकाशगुणेनहिशब्देन

पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात् एतत्स्व
रूपशब्देनोक्तं अस्यैवमूर्त्यादि सामान्यस्यशब्दादयः
षड्जादयः उष्मत्वादयः शुक्लत्वादयः कषायत्वादयः
सुरभित्वादयोमूर्त्यादीनां सामान्यानांभेदःसामान्या
न्यपिमूर्त्यादीनिजंबीरपनसामलकफलादीनि रसा
दिभेदात् परस्परंव्यावर्त्तन्ते तेनैतेषामेते रसादयो वि
शेषाः तथोक्तं एकजातिसमन्वितानां प्रत्येक पृथिव्या
दीनामेकैकयाजात्या मूर्त्तिस्नेहादिनासमन्वितानामे
षां षड्जादिधर्ममात्रव्यावृत्तिरितितदेवं सामान्यंमूर्त्या
द्युक्तं विशेषाश्च शब्दादयउक्ताः येचाहुः सामान्यविशे
षाश्रयोद्रव्यमितितान्प्रत्याह सामान्यविशेषसमुदा
योत्रदर्शनेद्रव्यंयेपितदाश्रयोद्रव्यमास्थिष नतैरपित
त्समुदायेनुभूयमानोनापन्होतव्यः नच तदपन्हवेत
योराधारोद्रव्यमिति भवति ॥ तस्मात्तदेवास्तु द्रव्यं
नतु ताभ्यांतत्समुदायाच्च तदाधारमपरंद्रव्यमुपलभा
महे ग्रावभ्यो ग्रावसमुदायाद्विनच तदाधारमपरंपृथ
ग्विधंशिखरं समूहोद्रव्यमित्युक्तम् तत्रसमूहमात्रं द्र
व्यमिति भ्रमापनुत्तये समूहविशेषोद्रव्यमितिनिर्धार
यितुंसमूह प्रकारानाह द्विधाहीति यस्मादेवंतस्मान्न
समूहमात्रंद्रव्यमित्यर्थः द्वाभ्यांप्रकाराभ्यांतिष्ठतीति
द्विष्ठःएकप्रकारमाह प्रत्यस्तमितेति प्रत्यस्तमितोभेदो
येषामवयवानांतेतथोक्ताः प्रत्यस्तमितभेदाश्चवयवा

यस्य स तथोक्तः एतदुक्तं भवति शरीरवृक्षयूथवनशब्दे
भ्यः समूहः प्रतीयमानो प्रतीतावयवभेदस्तद्वाचकश
ब्दाप्रयोगात् समूह एकोवगम्यते इति युतायुत सिद्धाव
यवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयं युतायु
त सिद्धावयवत्वं चाग्रे वक्ष्यते द्वितीयं प्रकारमाह शब्दे
नोपात्तभेदावयवानुगतः समूहः उभये देवमनुष्या इ
ति देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समू
हस्य भागौ भिन्नावुपात्तौ ननूभयशब्दात्तावदवयवभे
दो न प्रतीयते तत्कथमुपात्तभेदावयवानुगत इत्यत
आह ताभ्यां भागाभ्यामेव समूहोभिधीयते उभयशब्दे
न भागद्वयवाचि शब्दसहितेन समूहो वाच्यः वाक्यस्य
वाक्यार्थवाचकत्वादिति भावः पुनर्द्वैविध्यमाह स चेति
भेदेन चाभेदेन च विवक्षितः भेदविवक्षितमाह आम्राणां
वनं ब्राह्मणानां समूह इति भेद एव षष्ठीश्रुतेः यथा ग
गोणां गौरिति अभेदविवक्षितमाह आम्रवनं ब्राह्मणसं
घ इति आम्राश्च ते वनं चेति समूहसमूहिनोरभेदं
विवक्षित्वा सामानाधिकरण्यमित्यर्थः विधान्तरमाह स
पुनर्द्विविधः युतसिद्धावयवः समूहः युतसिद्धाः पृथक्सि
द्धाः सान्तराला अवयवा यस्य स तथोक्तः यूथ वनमिति सा
न्तराला हि तदवयवा वृक्षाश्च गावश्च अयुतसिद्धावयवश्च
समूहो वृक्षो गौः परमाणुरिति निरन्तरा हि तदवयवाः
सामान्यविशेषा वा सास्नादयो वेति तदेतेषु समूहेषु द्र

व्यभूतं निर्धारयति अयुतसिद्धेति तदेवं प्रासंगिकं द्रव्यं
त्युत्साद्यप्रकृतमुपसंहरति एतत्स्वरूपमित्युक्तमिति त
तीयरूपं विवक्षुः पृच्छति अथेति उत्तरमाह तन्मात्रमि
ति तस्यैकोवयवः परिणाम भेदः परमाणुः सामान्यं
मूर्त्तिः शब्दादयो विशेषाः तदा सा अयुतसिद्धा निरंत
रावयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः
यथाच्च परमाणुः सूक्ष्मरूपं एवं सर्वे तन्मात्राणि सू
क्ष्मरूपमिति उपसंहरति एतदिति अथ भूतानां चतु
र्थरूपं ख्यातिक्रियास्थितिशीलागुणाः कार्यस्वभावम
नुपतितु मनुगंतु शीलं येषां ते तथोक्ताः अत एवान्व
यशब्देनोक्ताः अथैषां पंचमं रूपमर्थवत्वं विवृणोति
भोगेति नन्वेवमपि संतु गुणा अर्थवंतस्तत्कार्याणां
तु कुतोर्थवत्वमित्यत आह गुणा इति भौतिका गोघटाद
यः तदेवं संयमविषयमुक्त्वा संयमं तत्फलं चाह तेष्वि
ति भूतप्रकृतयो भूतस्वभावाः संकल्पानुविधाने भू
तानां किं योगिनः सिद्ध्यतीत्यत आह वत्स स्थूलसंयम
जपाच्च तत्तः सिद्धयो भवंतीत्याह तत्राणिमा महानपि
भवत्यणुः लघिमा महानपि लघुर्भूत्वेषीकातूलइवाका
शे विहरति महिमाल्पोपिनागनगगनपरिमाणो भ
वति प्राप्तिः सर्वे भावाः संनिहिता भवंति योगिनस्तद्य
था भूमिष्ठ एवांगुल्यग्रेण स्पृशति चंद्रमसं स्वरूपसंय
मविनयात् सिद्धिमाह प्राकाम्यमिच्छानभिघातो नास्यरू

पभूतस्वरूपैर्मूर्त्यादिभिरभिहतेभूमावुन्मज्जति निमज्जति च यथोदके सूक्ष्मविषयसंयमजयासिद्धिमाह
वशित्वंभूतानिपृथिव्यादीनि भौतिकानि गोघटादीनि
तेषु वशीस्वतंत्रोभवति तेषांत्ववश्यः तत्कारणतन्मात्र
त्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्ये वशीकारस्ते
न यानियथावस्थापयति तानि तथावतिष्ठंतेइत्यर्थः
अन्वयविषयसंयमजयासिद्धिमाह ईशित्वंतेषांभू
तभौतिकानांविजितमूलप्रकृतिःसन् यःप्रभवउत्पादो
पश्चाप्ययोविनाशोयश्चव्यूहो यथावदवस्थापनं ते
षामीष्टेअर्थवत्वसंयमासिद्धिमाह यत्रकामावसायि
त्व सत्यसंकल्पता विजितगुणार्थवत्वोहियोगीयद्य
दर्थं तयासंकल्पयति तत्तस्मै प्रयोजनाय कल्पते वि
षमप्यमृतकार्येसंकल्प्यभोजयन्जीवयतीति स्यादे
तद्यथाशक्तिविपर्यासं करोत्येवंपदार्थविपर्यासमपि
कस्मान्नकरोतितथा चंद्रमसमादित्यंकुर्यात् कु
हूंचसिनीवालीमित्यतआहनचशक्तोपीति नखल्वे
तेयत्र कामावसायिनस्तत्रभगवतःपरमेश्वरस्या
ज्ञामतिक्रमितुमुत्सहंतेशक्तयस्तु पदार्थानांजाति दे
शकालावस्थाभेदेनानियतस्वभावाइतियुज्यते तात्
सु तदिच्छानुविधानमिति एतानष्टावैश्वर्याणितद्गो
नभिघातदृतिअणिमादिप्रादुर्भावइत्यनेनैव तद्धर्मान
भिघातसिद्धौपुनरुपादानं कायसिद्धिवत् एतत्संनो

पवद् सकलनिषयसंयमफलवत्त्वज्ञापनाय सुगम
मन्यत् कायसंपदमाह रूपसंपत् वज्रस्येवसंहन
नमवयव व्यूहो दृढो निबिडो यस्यसतथा जितभूत
स्य योगिनइंद्रियजयोपायमाह ग्रयः ग्रहणंच स्वरू
पंचास्मितान्वयश्चार्थवत्त्वं च तेषु संयमस्तस्मादि
त्यर्थः गृहीतिर्ग्रहणं तच्च ग्राह्याधीननिरूपणमिति
ग्राह्यं दर्शयति सामान्यविशेषात्मेति ग्राह्यमुक्त्वाग्रह
णमाह तथेति वृत्तिरालोचनं विषयाकारापरिणतिरि
तियावत् येत्वाहुः सामान्यमात्रगोचरेंद्रियवृत्तिरिति
तान्प्रत्याह नचेति गृह्यतेइतिग्रहणं सामान्यमात्रगो
चरग्रहणं वाह्येंद्रियंतत्रहिमनोवाह्ये प्रवर्त्तेत अन्य
थांध बधिराद्यभावप्रसंगात् तदिह यदि न विशेषत्र
त्रिपयमिंद्रियंतेनासावनालोचितोविशेषइतिकथंम
नसानुव्यवसीयेत तस्मात्सामान्यविशेष विषयमिंद्र
द्रियालोचनमिति तदेतद्ग्रहणमिंद्रियाणां प्रथमंरूपंद्वि
तीयरूपमाह स्वरूपं पुनरिति अहंकारोहि सत्वभागे
नात्मीयेनेंद्रियाण्यजीजनत् अतोयत्तत्रकरणत्वसामा
न्यंयच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि
प्रकाशात्मकमित्यर्थः तेषां तृतीयरूपमिति अहंका
रोहि इंद्रियाणांकारणमिति यत्रेंद्रियाणि तत्र तेनभ
वितव्यमिति सर्वेंद्रियसाधारणात्सामान्यमिंद्रियाणा
मित्यर्थः चतुर्थरूपमिति गुणानां हि द्वैरूप्यंव्यवसाया

त्मकत्व व्यवसेयात्मकत्वं च तत्र व्यवसेयात्मकतांग्रा-
ह्यतामास्थाय पंचतन्मात्राणि भूतभौतिकानि निर्मिते
व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहंकारा
णींद्रियाणीत्यर्थः शेषंसुगमम् एवं रूपेंद्रियजयात्सि
द्धीराह ततोऽश्च विदेहानामिंद्रियाणां करणभावो वि
करणभावः देशः काश्मीरादिः कालातीतादिर्विषयः
सूक्ष्मादिः सान्वयेंद्रियजयात्सर्वप्रकृतिविकारवशि-
त्वंप्रधानजयः ताएताः सिद्धयो मधुप्रतीका इत्युच्यंते
योगशास्त्रनिष्णातैः स्यादेतत् इंद्रियजयादिंद्रियाणि
सविषयाणि वश्यानि भवंतु प्रधानादीनां तत्कारणा
नां किमायातमित्यतआह एताश्चेति करणानामिंद्रि
याणांपंचरूपाणि ग्रहणादीनि तेषांजयात् एतदुक्तं
भवति नेंद्रियमात्रजयस्यैताः सिद्धयोपितु पंचरूप-
स्यतदंतर्गतंच प्रधानादीति तएते ज्ञानक्रियारूपैश्वर्य
हेतवः संयमाः साक्षात्पारंपर्येणच स्वसिद्धुपसंहारसं
पादितश्रद्धाद्वारेणयदर्थास्तस्याः पुरुषान्यताख्यातेर
वांतरविभूतीर्दर्शयति सच निर्धूतरजस्तमोमलत-
याचैशारद्यं ततः परानशीकारसंज्ञोरजस्तमोभ्यामुप
प्लुत्वं हि चित्तसत्वम वश्यमासीत्तदुपशमेतु तदृश्यंयो
गिनोवशिनः तस्मिन्वश्येयोगिनः स्वपुरुषान्यताख्या
तिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं एतदेवंवि
वृणोति सर्वात्मान इति व्यवसायव्यवसेयात्मानोजड

प्रकाशरूपादित्यर्थः तदनेन क्रियैश्वर्यमुक्तं ज्ञानैश्व=
र्यमाह सर्वज्ञातृत्वमिति अस्या अपिद्विविधायाः सि
द्धेर्वैराग्यपर्योगिजन प्रसिद्धां संज्ञामाह एषाविशोके
ति क्लेशाश्च बंधनानिच कर्माणितानि क्षीणानियस्य
सतथा संयमांतराणांपुरुषार्थाभासफलत्वात् विवेक
ख्यातिसंयमार्थतां दर्शयितुं विवेकख्यातेः परवैरा=
ग्योपजननद्वारेण कैवल्यं फलमाह तस्य यदा=
स्ययोगिनः क्लेशकर्मक्षये एवं ज्ञानंभवति किंभू
तमित्याह सत्त्वस्यायं विवेकप्रत्ययोधर्मः शेषं तत्र
तत्र व्याख्यातत्वात्सुगमं संप्रतिकैवल्यसाधनेप्रव
त्तस्य योगिनःप्रत्यूह संभवे तन्निराकरणमुपदिश
तिस्थागात् तानि स्थानानि येषां संति ते स्थानिनो
महेंद्रादय तैरुपमंत्रणं तस्मिन्संगश्च स्मयश्चन
कर्त्तव्यःपुनरनिष्टप्रसंगतः तत्रेयं देवास्थानैरुपमं
त्रयंते तंयोगिनमेकंनिर्द्धारयितुं यावंतो योगिनःसं
भवंति तावंतएवाह चत्वारइति तत्र प्रथमकल्पि=
कस्य स्वरूपमाह तत्राभ्यासीति प्रवृत्तमात्रं न पुनः
वशीकृतंज्योतिर्ज्ञानं परचित्तादि विषयंच सत=
था द्वितीयमाह ऋतंभरप्रज्ञ इति यत्र दमुक्तात्रऋतंभ
रातत्र प्रज्ञेति सहि भूतेंद्रियाणि जिगीषुः तृतीयमाह
भूतेंद्रियजयीति तेनहि स्थूलादिसंयमेन ग्रहणादि
संयमेनच भूतेंद्रियाणिजितानितमेवाह सर्वेषु भा

वितेषु निष्पादितेषु भूतेंद्रियजयासरचित्तादिनानादि
षुकृतरक्षाबंधःयतस्तेभ्योनच्यवते भावनीयेषु नि
ष्पादनीयादिषुविशोकादिषुपरवैराग्यपर्यंतेषुकर्त
व्यसाधनवान्पुरुषप्रयत्नस्यसाधनविषयस्यैवसा
ध्यनिष्पादकत्वात् चतुर्थमाह चतुर्थइति तस्यहि
भगवतोजीवन्मुक्तस्यचरमदेहस्य चित्तप्रतिसर्गए
कोर्थः तदेतेषुयोगिषुउपनिमंत्रणविषयंयोगिनम
वधारयति तत्रमधुमतीमिति प्रथमकलिकेतावत्
त्समहेंद्रादीनांतस्यातिशंकैवनास्तितृतीयोपितैर्नोपनि
मंत्रणीयःभूतेंद्रियवशित्वेनैवतस्यासंचतुर्थेपिपर
वैराग्यसंपत्तेरासंगशंकादूरोत्सारितैवेति पारिशेष्या
त् द्वितीयएवकृतंभरप्रज्ञस्तदुपनिमंत्रविषयइति
वैहायसं आकाशगामि अक्षयमविनाशि अजरंस
दाभिनवम् स्मयकरणेदोषमाह स्मयादयमिति स्म
यात्सुस्थितंमन्यो नानित्यतांभावयिष्यति नतस्यां प्र
णिधास्यतीत्यर्थः सुगममन्यत् कचित्किंचित्संयमात्स
र्वज्ञतासाच ननिःशेषज्ञताअपितु प्रकारमात्रविव
क्षया यथासर्वैर्व्यंजनैर्भुक्तमिति अत्रहि यावंतोव्यंज
नप्रकारास्तैर्भुक्तमितिगम्यतेनतु निःशेषैरिति अ
स्त्विनिःशेषवचनःसर्वशब्दः यथोपनीतमन्नंसर्वं
मप्राशकेनेति ॥ तन्नहि निःशेषमितिगम्यते तदिहं
निःशेषज्ञातलक्षणस्यविवेकजज्ञानस्यसाधनसंय

मंमाह क्षनं क्षणपदार्थनिदर्शनपूर्वकमाह यथेति=
लोष्टस्यहिप्रविभज्यमानस्ययस्मिन्नवयवेल्पत्वतार
तम्यंव्यवतिष्ठते सोपकर्षपर्यंतःपरमाणुर्यथा तथा
पकर्षपर्यंनःकालःक्षणःपूर्वापरभागविकलकाल
कलेतियावत् तमेवक्षणंप्रकारांतरेणदर्शयति याव
तावेति परमाणुमात्रं देशमतिक्रामेदित्यर्थः क्रम प
दार्थमाह तस्यवाहेति तसदेनक्षणःपराम्दश्यते नचै
दृशःक्रमोवास्तवः किंतुकाल्पनिकस्तस्यसमाहाररू
पस्यायुगपदुपस्थितेषुवास्तवत्वेनविचारासहत्वा
दित्याह क्षणतक्रमयोरिति अयुगपद्भाविक्षणधर्म
त्वात् क्रमस्यक्षेण तत्क्रमयोरप्यवास्तवत्वं समाहार
स्यैनैःसर्गिकवैतंडिक बुध्यतिशयरहिता लौकिकाः
प्रतिक्षणएवव्युत्थितदर्शनाभ्रांतायेकालमीदृशंवा
स्तवमभिमन्यंतइति नौकिंक्षणोप्यवास्तवोनेत्याह
क्षणस्तुवस्तुपतितोवास्तवइत्यर्थः क्रमस्यावलंब
नंअवलंबः सोस्यास्तीतिक्रमेणावलंब्यतेवैकल्पि=
केनेत्यर्थः क्रमस्य= क्षणावलंबनत्वेहेतुमाह क्रम
श्चेति क्रमस्यावास्तवत्वेहेतुमाह नचेति चोहत्वः
र्थे यस्तुवैजात्यात्सहभावमुपेयात्तंप्रत्याह क्रमश्च न
द्वयोरिति कस्मादसंभवइत्यतआह पूर्वस्मादिति उ
त्तरस्मिनस्मादिति तत्किमिदानींशशविषाणायमा
णा एवपूर्वोत्तरक्षणाः नेत्याह येत्विति अन्वितास्स

म्येनसमन्वागताइत्यर्थः उपसंहरति तेनेति वर्तमान
स्याध्वक्रियासु स्वोचितासु सामर्थ्यादिति यद्यप्येत
द्विवेकजंज्ञानंनिःशेषभावविषयमित्यग्रेवक्ष्यते
तथाप्यतिसूक्ष्मत्वात् प्रथमं तस्यविषयविशेषउप
क्षिप्यतेजातिः लौकिकानां जातिभेदोऽन्यतायाज्ञापक
हेतुः तुल्यजातिः गोत्वंतुल्यश्चदेशः पूर्वत्वादिः काला
क्षीस्वस्तिमत्योर्लक्षणभेदः परमिति द्वयोरामलकयो
स्तुल्या आमलकत्वजातिर्वर्तुलादिलक्षणं तुल्यंदेशभे
दः परमिति यदातुयोगिज्ञानंजिज्ञासुनाकेनचित्पूर्वा
मलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेशउपावर्त्य
तेउत्तरदेशमामलकं ततोपसार्य पिधायवा तदा तु
ल्यदेशत्वेपूर्वमेतदुत्तरमेतदितिप्रविभागानुपपत्तिः
प्राज्ञस्य लौकिकस्यत्रिप्रमाणीनिपुणस्यअसंदिग्धेन
चतत्त्वज्ञानेनभवितव्यं विवेकजज्ञानवतोयोगिनः सं
दिग्धत्वानुपपत्तिः अतउक्तं सूत्रकृता ततः प्रतिपत्ति
ततइतिव्याचष्टे विवेकजज्ञानादिति क्षणतत्क्रमसं
यमान्नीतंज्ञानंकथमामलकंतुल्यजातिलक्षणदेशा
दामलकांतराद्विवेचयतीति पृच्छतिकथमिति उत्त
रमाह पूर्वामलकसहक्षणोदेशः तेनसहनिरंतर
परिणामइतियावत् उत्तरामलकसहक्षणाद्देशादुत्त
रामलकनिरंतरपरिणामाद्भिन्नः भवतुदेशयोर्भेदः किं
मायातमामलकभेदस्येत्यतआह तेचामलकेस्वदे

शक्षणानुभवमिवे स्वदेशसहितोयः क्षणस्तस्यामल
कस्यकालकलास्वदेशेन सहोत्तराधर्यरूपपरिणाम
लक्षितासा स्वदेशक्षणस्तस्यानुभवः प्राप्तिर्वाज्ञानं
वा तेन भिन्नेआमलके ययोरामलकयोः पूर्वोत्तरा-
भ्यांदेशाभ्यामौत्तराधर्यपरिणामक्षणआसीत्तयोर्देशां
तरौत्तराधर्य्यपरिणामक्षणविशिष्टत्वमनुभवन्संयमी
वेभिन्नएवप्रत्येति सप्रतितद्देशपरिणामेपि पूर्वभिन्न
देशपरिणामाद्विशिष्टस्यचैतद्देशपरिणामक्षणस्यसं
यमतःसाक्षात्करणात्तदिदमुक्तमन्यदेशक्षणानुभ-
वस्तुनयोरन्यत्वेहेतुरिति ६९ अनेनैवनिदर्शनेनलौ
किकपरीक्षकसंवादादिनापरमाणोरपीदृशस्यभेदो
योगीश्वरबुद्धिगम्यःश्रद्धेयइत्याह एतेनेति अपरेतु
वर्णयंति वर्णनमुदाहरति यइति वैशेषिकाहि नित्यद्र
व्यवृत्तयोंत्याविशेषादृत्याहुः तथाहि योगिनोमुक्ता
न्तुल्यजातिदेशकालान्यवधिरहितान्परस्परतो
भेदेनप्रत्येकंतत्वेनचप्रतिपद्यंतेतस्मादस्तिकश्चिद्द
त्योविशेषइति तथाच सएवनित्यानां परमाण्वादीनां
द्रव्याणांभेदकइति तदेतत्दूषयति तत्रापीति जाति
देशलक्षणान्युदाहृतानि मूर्त्तिःसंस्थानंयथैकं विशुद्धा
वयवसंस्थानोपपन्नमपसार्यतस्मिन्नेवदेशेन्यव्यग्र
स्यद्रष्टः कुत्सितावयवसंनिवेशउपावर्त्यते तदालस्य
संस्थानभेदेन भेदप्रत्ययःशरीरं वामूर्तिः तत्संबंधेना

त्मनासंसारिणां मुक्तात्मनां वा भूतचरेणवादृशताद्द
शेन भेदइतिसर्वत्र भेदप्रत्ययस्यान्यथा सिद्धिर्नास्तिवि
शेषकल्पना व्यवधिर्भेदकारणं यथाकुशपुष्करद्वीप
योर्देशस्वरूपयोरिति यतोनातिदेशादिभेदालोकबुद्धि
गम्याअतउक्तं क्षणभेदस्तुयोगिबुद्धिगम्यएवेतिएवंका
रःक्षणभेदमवधारयति नयोगिबुद्धिगम्यत्वं तेनभूतच
रेणदेहसंबंधेन मुक्तात्मनामपि भेदोयोगिबुद्धिगम्यउ
क्तइति यस्यतूक्ताभेदहेतवोनसंतितस्यप्रधानस्य
भेदोनास्तीत्याचार्योमेने यस्मादुक्तंचेकृतार्थं प्रतिनष्टमप्य
नष्टं तदप्यसाधारणत्वादिति तदाह मूर्त्तिव्यवधीतिउक्तं
तद्देहेतूपलक्षणमेतत् जगन्मूलस्यप्रधानस्यपृथक्त्वंभे
दोनास्तीत्यर्थः तदेवंविषयैकदेशं विवेकजज्ञानस्य द
र्शयित्वाविवेकजं ज्ञानंलक्षयति तारकंविवेकजंज्ञानमि
ति लक्ष्यनिर्देशः शेषंलक्षणंसंसारसागरात्तारयतीति
तारकं पूर्वस्मात्प्रातिभादिदेशयतिसर्वथा विषमिति
पर्यायाअवांतरविशेषाः अतएवविवेकजं ज्ञानंपरि
पूर्णं नास्य कचित्किंचित्कथंचित्कदाचिदगोचरइत्य
र्थः आस्तांतावत् ज्ञानांतरंसंप्रज्ञातोपि तावदस्यांशः
तस्मादतःपरं किं परिपूर्णमित्याह अस्यैवांशो योगप्र
दीपः संप्रज्ञातः किमुपक्रमः किमवसानश्चासावित्या
हमधुमतीमिति ऋतंभराप्रज्ञैव मधुमोदकारणत्वा
त् यथोक्तं प्रज्ञाप्रसादमारुह्येति तद्रूतीमधुमतीधियो

वस्थातामुपादाययावदस्यपरिसमाप्तिःसतथाप्रांत
भूमिःप्रज्ञाअतएवविवेकजंज्ञानं तारकंभवति तदंशस्य
योगप्रदीपस्यतारकत्वादिति तदेवंपरंपरयाकैवल्य
स्यहेतूस्सविभूतीन्संयमानुक्त्वा सत्वपुरुषान्यताज्ञानं
साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति प्राप्ते
तिविवेकजंज्ञानंभवतुमावाभूत् सत्वपुरुषान्यता
ख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः सत्यमिति इतिसू
त्रसमाप्तौ ईश्वरस्यपूर्वोक्तैःसंयमैर्ज्ञानक्रियाशक्तिम
तोऽनीश्वरस्यवा समनंतरोक्तेन संयमेन विवेकजः
ज्ञानभागिन इतरस्यचानुत्पन्नज्ञानस्यनविभूतिषु
काचिदपेक्षास्तीत्याह नहीति ननुयद्यनपेक्षिता वि
भूतयः कैवल्येव्यर्थस्तर्हि तासामुपदेश इत्यतआह
सत्वशुद्धिद्वारेणेति इत्थंभूतलक्षणे तृतीयानात्यंतम
हेतवःकैवल्ये विभूतयः किंतु नसाक्षादित्यर्थः ज्ञानं
विवेकजमुपक्रांतं यत्त्व पारंपर्येणकारणं तदौपचारि
कंनमुख्यं परमार्थतस्तु ख्यातिरेव मुख्यमित्यर्थः ज्ञा
नादिति प्रसंख्यानादित्यर्थः अत्रांतरंगान्यंगानिपरि
णामाःप्रपंचिताःसंयमाद्भूतिसंयोगस्तासुज्ञानंविवे
कजमिति पादार्थसंग्रहश्लोकः॥इतिश्रीवाचस्प
तिमिश्रविरचितायांपातंजलभाष्यव्याख्यायांतत्त्ववै
शारद्यांविभूतिपादस्तृतीयःसमाप्तः ३॥ ॥७॥ त
देव प्रथम द्वितीय तृतीयःपादैःसमाधितत्साधनतद्वि

भूतयःप्राधान्येनव्युत्पादिताः इतस्तु प्रासंगिकमोपो
द्घातिकंचोक्तं इदानींतद्धेतुकंकैवल्यंव्युत्पादनीयंन
चैतत्कैवल्यभागीयंचित्तपरलोकंचपारलोकिकंविज्ञा
नातिरिक्तंचित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्ता
रमात्मानंचप्रसंख्यानपरमकाष्ठांच विनाव्युत्पादश
क्यंवक्तुमितितदेतत्सर्वमत्रपादेव्युत्पादनीयं इतर
च्चप्रसंगादुपोद्घाताद्वातत्रप्रथमंसिद्धचित्तेषुकैवल्य
भागीयंचित्तंनिर्धारयितुकामःपंचतयीं सिद्धिमाह
जन्मौषधिमंत्रतपःसमाधिजाःसिद्धयःव्याचष्टे देहांत
रितेति स्वर्गोपभोगभागीयात्कर्मणोमनुष्यजातीयाः
चरितात्कुतश्चिन्निमित्तात्लब्धपरिपाकात्क्वचिद्देव
निकायेजातमात्रस्यैवदिव्यदेहांतरितासिद्धिरणिमाः
द्याभवतीतिओषधिसिद्धिमाह असुरभवनेष्विनिमनु
ष्योहिकुतश्चिन्निमित्तादसुरभवनमुपसंप्राप्तःकमनी
याभिरसुरकन्याभिरुपनीतंरसायनमुपयुज्याजरामर
णत्वमन्याश्चसिद्धीरासादयति इहैववारसायनोपयो
गेनयथामांडव्योमुनीरसोपयोगाद्विंध्यवासीतिमंत्रसि
द्धिमाह मंत्रैरितितपःसिद्धिमाह तपसेतिसंकल्पसिद्धि
माह कामरूपीतियदेवकामयतेणिमादितदेकपदेस्य
भवतीतियत्रकामयतेश्रोतुंवामंतुंवातत्र तदेवशृणो
तिमनुतेचेतिआदिशब्दाद्दर्शनादयःसंगृहीताइति
समाधिजाःसिद्धयो व्याख्याता अधस्तने पादे अ=

यच्चतस्य तु सिद्धिर्यौषधादिसाधनासु तेषामेव कार्येंद्रियाणां जात्यंतरपरिणतिरिष्यते सा पुनर्न तावदुपादानमात्रात् न हि तावन्मात्रमुपादानं न्यूनाधिकद्रव्यादिभावे स्यभवति नो खल्वविलक्षणं कारणं कार्यवैलक्षण्यायालमाऽस्यात्त्राकस्मिकत्वं भूदित्याशंक्य पूरयित्वा सूत्रं पठति तत्र कार्येंद्रियाणामन्यजातीय परिणतानां जात्यंतरपरिणामः प्रकृत्यापूरात् मनुष्यजातिपरिणतानां कार्येंद्रियाणां यो देवतिर्यग्जातिपरिणामः स खलु प्रकृत्यापूरात् कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि भूतानि इंद्रियाणां च प्रकृतिरस्मिता तदवयवानुप्रवेशश्चापूरः तस्माद्भवति तदिदमाह पूर्वपरिणामेति ननु यथापूरेणानुग्रहः कस्मात्पुनरसौ न सदातनइत्यत आह धर्मादीति तदनेन तस्यैव शरीरस्य बाल्यकौमारयौवनवार्द्धकादीनि च न्यग्रोधधानायान्यग्रोधतरुभावश्च वन्हिकणिकायास्तृणराशिनिवेशिनायावाप्तोद्भवज्ज्वालासहस्रसमालिंगितगगनमंडलत्वं च व्याख्यातं प्रकृत्यापूरादित्युक्तं तत्रेदं संदिह्यते किमापूरः प्रकृतीनां स्वाभाविको धर्मादिनिमित्तो वेति किंप्राप्तं सतीष्वपि प्रकृतिषु कदाचिद्धर्मादि निमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्त एव प्राप्त आह निमित्तं क्षेत्रिकवत् सत्यं धर्मादयो निमित्तं न तु प्रयोजकाः तेषामपि प्रकृतिकार्यत्वात् न च कार्यं कारणं प्रयोज

यति तस्य तदधीनोऽस्मितया कारणपरतंत्रत्वात् स्व
तंत्रस्य च प्रयोजकत्वात् न खलु कुलालमंतरेण मृद्दंड
चक्रसलिलादय उत्पित्सिते नोऽसन्नेन वा घटेन प्रयुज्यं
ते किंतु स्वतंत्रेण कुलालेन न च पुरुषार्थोपि प्रवर्त्तकः किं
तु तदुद्देशेनेश्वरः उद्देशतामात्रेण पुरुषार्थः प्रवर्त्त=
क इत्युच्यते उत्पित्सोस्त्वस्य पुरुषार्थस्याव्यक्तस्य=
स्थिति कारणत्वमुक्तं न चैवं ता धर्मादीनाम निमित्त
ता प्रतिबंधापनयनमात्रेण क्षेत्रिकवदुपपत्तेरी=
श्वरस्यापि धर्माधिष्ठानार्थं प्रतिबंधापनय एव व्या
पारो वेदितव्यः तदेतन्निगदव्याख्यातेन भाष्येणोक्तं
प्रकृत्यापूरणसिद्धेः समर्थ्ये सिद्धिविनिर्मितनानाका
यवर्त्तिचित्तैकत्वनानात्वे विचारयति यदा लिति यत्र
नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदादेका
भिप्रायानुरोधश्च परस्परप्रतिसंधानं च न स्यातां पुरु
षांतरवत् तस्मादेकमेव चित्तं प्रदीपवद्विसारितया
बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्तेऽभ्याह नि
र्माणचित्तान्यस्मितामात्रात् यथा वज्जीवच्छरीरतस्त
वेमेके कासाधरण चित्तान्वितं दृष्टं न यथा चैत्रमैत्रा
दिशरीरं तथा च निर्माणकाया इति सिद्धं तेषामपि
प्रातिस्विकं मन इत्यभिप्रायेणाह अस्मितामात्र=
मिति यदुक्तमनेकचित्तत्वे एकाभिप्रायानुरोधश्च
प्रतिसंधानं च न स्यातामिति तत्रोत्तरं सूत्रं प्रवृत्तिभे

देवप्रयोजकं चित्तमेकमनेकेषामभविष्यदेवं दोषो यदि चित्तमेकं नानाकायवर्त्ति मनो नायकं न निरमास्यत्तन्निर्माणे त्वदोषः न चैकं गृहीत्वा कृतं प्रातिस्विकैर्मनोभिः कृतं वा नायकनिर्माणेन निजस्यैव मनसो नायकत्वादिति वाच्यं प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेरिति अत्र पुराणं भवति एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्तु सः तस्माच्च मनसो भेदा जायन्ते चैत एव हि एकधा स द्विधा चैव त्रिधा च बहुधा पुनः योगीश्वरः शरीराणि करोति विकरोति च प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिवेति नदेतेनाभिप्रायेणाह बहूनां चित्तानामिति तदेवमुदितेषु पंचसु सिद्धचित्तेषु अपवर्गभागीयं चित्तं निर्धारयति तत्र ध्यानजमनाशयं आशेरत इत्याशयाः कर्मवासनाः क्लेशवासनाश्च त एते न विद्यन्ते यस्मिन् तदनाशयं चित्तं अपवर्गभागीयं भवतीत्यर्थः यतो रागादिनिबंधना प्रवृत्तिर्नास्ति अतो नास्ति पुण्यपापाभिसंबंधः कस्मात्पुना रागादिजनिता प्रवृत्तिर्नास्तीत्यत आह क्षीणक्लेशत्वादिति ध्यानजस्यानाशयस्य मनोन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशयवतामाह इतरेषां त्विति तत्रैव च हेतुपरं सूत्रमवतारयति यत इति कर्माशु

क्लाकृष्णमितरेषामाशयवतामाह इतरेषामिदंस्था=
नं चतुर्षु समवेता चतुष्पदा यद्यावद्बहिः साधन=
साध्यं तत्र सर्वत्रास्ति कस्यचित्पीडा नहि व्रीह्यादि
साधनेपि कर्मणि परपीडा नास्ति अवघातादिसम
ये पिपीलिकादिवधसंभवात् अंततोबीजादिवधेन
स्तंबादिभेदोत्पत्तिप्रतिबंधात् अनुग्रहश्च दक्षिणा
दिना ब्राह्मणादेरिति शुक्लातपःस्वाध्यायध्यानवता=
मसंन्यासिनामशुक्लत्वमुपपादयति साहीति अशुक्ला
कृष्णासन्यासिनां सन्यासिनोदर्शयति क्षीणेतिकर्म
सन्यासिनोहि नक्वचिद्बहिः साधनसाध्ये कर्मणिप्रवृ
त्ता इतिनत्वेषामस्तिकृष्णः कर्माशयः योगानुष्ठान
साध्यस्य कर्माशयफलस्येश्वरे समर्पणान्नशुक्लः क
र्माशयः निरत्ययफलो हि शुक्ल उच्यते यस्य फलमेव
नास्ति कुतस्तस्य निरत्ययफलं इत्यर्थः तदेवं चतु
ष्टयीं कर्मजातिमुक्त्वा कतमाकस्येत्यवधारयति त=
त्राशुक्लमिति कर्माशयं विविच्य क्लेशाशयगतिमा=
ह ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानां
यज्जातीयस्यपुण्यजातीयस्यापुण्यजातीयस्य वा क
र्मणो यो विपाको दिव्योवा नारको वा जात्यायुर्भोग=
स्तस्यविपाकस्यानुगुणाः ताएवाह या वासनाः कर्म
विपाकमनुशेरते अनुकुर्वंति दिव्यभोगजनिताहि=
दिव्यकर्मविपाकानुगुणावासनाः नहिमनुष्यभोग

वासनाभिव्यक्तौ दिव्यकर्मफलोपभोगसंभवः तस्मा
त्स्वविपाकानुगुणा एववासनाः कर्मोभिव्यञ्जनीया
इति भाष्यार्थः स्यादेतत् मनुष्यस्य प्रापणानंतर म
धिगतमार्जारभावस्यानंतरतयामनुष्य वासनाया ए
वाभिव्यक्त्याभवितव्य नखल्वस्ति संभवोयदनंतर=
दिवसानुभूतं न स्मर्यते व्यवहित दिवसानुभूतंस्म
र्यत इत्यतआह जातिदेशकालत्वात् भवतु वृषदंश
वासनायाजात्यादिव्यवधि स्तथापि तस्याः फलन
आनंतर्यवृष दंशविपाकेन कर्मणातस्या एव स्व
विपाकानु गुणाया अभिव्यक्तौ तत्स्मरण समुत्पादा
दित्याह वृषदंश विपाकोदयइति उदेत्यस्मादित्युद
यः कर्माशयः पुनश्च स्वव्यंजकाजनएव उदयात् अ
भिव्यंज्येत विपाकारंभाभिमुखः क्रियेतेत्यर्थः अभि=
संस्कारः क्रियाउपादाय गृहीत्वा व्यज्येत यदिव्यज्ये
त स्वविपाकानुगुणाएव वासना गृहीत्वा व्यज्यते=
त्यर्थः आनंतर्यमेव फलतः कारण द्वारकमुपपाद्य=
कार्यद्वारकमुपपादयति कुतश्च स्मृतीति एकरूप
तया सादृश्य तदेवाह यथेति ननु अनुभवसंरूपा=
श्चेत्संस्काराः तथासत्यनुभवा विशरारव इत्येतेपिवि
शरारवः कथं चिरभाविने अनुभवाय कल्पेरन्नित्य
तआह तेच कर्मवासनानुरूपाः यथाऽपूर्वस्यापि स
णिककर्म निमित्तमपि एवं क्षणिकानुभवनिमित्तोपि

निमित्तंविभजते निमित्तंचेति आदिग्रहणेनेंद्रियः
धनाद्योगृह्यंते अद्वावीत्यत्रापि वीर्येस्मृत्याद्योग
ह्यंते आंतरत्वेसंमतिमाचार्याणामाह तथाचोक्तंवि
हारोव्यापारः प्रकृष्टंशुक्लं तयोर्बाह्याभ्यंतरयोर्मध्येज्ञा
नवैराग्येतज्जनितोधर्मः केनवाह्यसाध्येन धर्मेणाति
शय्येतेअभिभूयेतेज्ञानवैराग्यजावेवधर्मौतमभिभ
वतःजीवभावादपनयतइत्यर्थः अत्रैवसुप्रसिद्ध ः
मुदाहरणमाह ॥ दंडकारण्येति अथैताश्चित्त
वृत्तयोवासनाश्चअनादयश्चेत्कथमासामुच्छेदो न
खलुचितिशक्तिरनादिरुच्छिद्यतेइत्यतआह हेतुफ
लाभावः अनादेरपि समुच्छेदो दृष्टः तद्यथाऽनागतत्वस्ये
ति सव्यभिचारत्वादसाधनंचितिशक्तिस्तुविनाशका
रणाभावात् नविनश्यति नत्वनादित्वात् उक्तंचवा
सनानामनादीनामपि समुच्छेदे कारणंसूत्रेणेति ॥
अनुग्रहोपघातावपि धर्माधर्मादिनिमित्तमुपलक्षय
तः तेन सुरापानाद्योपिसंगृहीताभवंति नेत्रीनायि
काअत्रैवहेतुमाह मूलमिति प्रत्युत्पन्नतावर्तमान
ता नतुधर्मस्वरूपोत्पादः अत्रैवहेतुर्नहीति यदभि
मुखीभूतंवस्तुकामिनी संपर्कादि व्यापकाभावेव्या
प्यस्याभावइतिसूत्रार्थः उत्तरसूत्रमवतारयितुंशंक
ते नास्तीति अमतइति तु संपाताद्यातं निदर्शनाय
वा अतीताधर्माणां नास तामुत्पादोनसत्तांविनाशः

किंतु सत्तामेव धर्माणामध्वभेदएवोदयव्ययाविति सूत्रार्थः अनुभूताभ्यासायेनव्यक्तिस्तत्तया संप्रतिव्यक्तिर्नास्तीतियावत् ततश्चत्रैकाल्येपि धर्मःसन्निस्याह यदिचेति नह्यसन् ज्ञानविषयः संभवतीतिनिरुपाख्यत्वात् विषयाभावेहि विज्ञानं नासतिविषयेभवतित्रैकाल्यविषयंच विज्ञानं योगिनां अस्मदादीनांच विज्ञानमसतिविषयेनोत्पन्नंस्यात् उत्पद्यतेच तस्मादतीतानागते सामान्यरूपेणसमनुगतेस्तइति एवमनुभवतो ज्ञानविषयसत्त्वे हेतुरुक्तःउद्देश्यत्वादप्यनागतस्यविषयत्वेन सत्त्वमेवेत्याह किंच भोगभागीयस्येति कुशलोनिपुणः अनुष्ठेयेपिच यद्यन्निमित्तं तत्सर्वं नैमित्तिकेसत्येव विशेषमाधत्ते यथाकाण्डलावबेदाध्यायादयः नखल्वेते काण्डलावादयोऽसंतमुत्पादयंति सतएवतु तत्राभिविकारोकुर्वंति एवंकुलालादयोपि सतएव घटस्यवर्त्तमानभावहेतवइत्याह सतश्चेति यदितु वर्त्तमानत्वाभावादतीतानागतयोरसत्त्वंहंतभोः वर्त्तमानस्याप्यभावःअतीतानागतत्वाभावात् स्वार्थे विशिष्टतयातु सत्त्वं त्रयाणामप्यविशिष्टमित्यभिप्रायेणाह धर्मोचेति प्रत्येकमवस्थानंप्रत्यवस्थितिरिति द्रव्यतइति द्रव्येधर्मिणीसार्वविभक्तिकस्तसिः यद्यतीतानागतावतीतानागतत्वेनस्तः नर्हि वर्त्तमानसमये तत्वा

भावान्नस्यानामित्यतआह एकस्यचेति प्रकृतमुपसं
हरति नाभूत्वाभावइति स्यादेतत् अयंतु नानाप्रकारो
धर्मिधर्मावस्था परिणामरूपो विश्वभेदप्रपंचोनप्र
धानादेकस्माद्भवितुमर्हति नह्यविलक्षणात्कारणा
त् कार्यभेदसंभवइत्यतआह तेनः तेत्र्यध्वानो धर्मा
व्यक्ताश्चसूक्ष्माश्चगुणात्मानोनत्रैगुण्यातिरिक्तमे
षामस्तिकारणं वैचित्र्यंतु तदाहिताऽनादिक्लेशवा
सनानुगताद्वैचित्र्यात् यथोक्तं वायुपुराणे वैश्वरू
प्यात्प्रधानस्यपरिणामोयमद्भुतइति व्यक्तानांपृथि
व्यादीनामेकादशेंद्रियाणांचवर्त्तमानानामतीताना
गतत्वंषड्विशेषायथायोगंभवंति संप्रति विश्वस्य
नित्यानित्यरूपेविभजन् नित्यरूपमाह सर्वमिदमि
ति दृश्यमानं संनिवेशः संस्थानभेदवान्परिणामइ=
त्यर्थः अत्रैव षष्टितंत्रशास्त्रस्यानुशिष्टिः मायेवतु न
मायासुतुच्छकं विनाशि यथाहिमायान्हायैवान्यथा
भवति एवं विकाराअप्याविर्भाव तिरोभावधर्माणः
प्रतिक्षणमन्यथाप्रकृतिर्नित्यतयामाया विधर्मेणप
रमार्थेति भवतु त्रैगुण्यस्येत्थं परिणामवैचित्र्यं एक
स्तु परिणामः पृथिवीयमितिवातोयमितिवा कुतःआ
त्मनएकत्वविरोधादित्याशंक्य सूत्रमवतारयति
यदातु सर्वेगुणाइति परिणामत्वं बहूनामप्येकःपरि
णामोदृष्टः तद्यथागताश्वमहिषमातंगानांरूमानि

क्षिप्तानामेकोलवणत्वजातीयलक्षणःपरिणामःव र्त्तितैलानलानांच प्रदीपइति एवंबहुत्वेपि गुणानां परिणामैकत्वंततस्तन्मात्रभूतभौतिकानां प्रत्येकं तत्वमेकत्वं ग्रहणात्मकानां सत्त्वप्रधानतयाप्रका शात्मनामहंकारावांतरकार्याणांकरणभावेनेकःप रिणामःश्रोत्रमिंद्रियं तेषामेवं गुणानां तमःप्रधानत याजडत्वेन ग्राह्यात्मकानां शब्दतन्मात्रभावेनेकः परिणामःशब्दोविषयःशब्दइति शब्दतन्मात्रविष यइतिजडत्वमाह नतु तन्मात्रस्य श्रोत्रविषयत्वसं भवइति शेषंसुगमं अथविज्ञानवादिनंवैनाशिक मुत्थापयति नास्त्यर्थो विज्ञानविसहचरइति यदिहि भूतभौतिकानि विज्ञानमात्राद्भिन्नानि भवेयुस्ततस्त दुत्पत्तिकारणमीदृशंप्रधानकल्पेत नतु तानि विज्ञा नातिरिक्तानिसंति परमार्थतः तत्कथं प्रधानकल्प नंकथंचग्रहणानामिंद्रियाणामहंकारविकाराणां कल्पनेति तथाहिजडस्यार्थस्यस्वयमप्रकाशत्वान्ना स्त्यर्थोविज्ञानविसहचरःसाहचर्यंसंबंधःतदभावो विसहचरः निरभावार्थः विज्ञानासंबंधी नास्तिइति व्यवहारयोग्यइत्यर्थःअस्तितु ज्ञानमर्थविसहच रंतस्यस्वयंप्रकाशकत्वेनस्वगोचरास्तिताव्यवहारेक र्तव्येजडमर्थंप्रत्यपेक्षाभावात्तदनेनवेद्यत्वसहोपलं भनियमौसूचितौविज्ञानवादिनातौचैवं प्रयोगमारो

हतः यद्भिद्यते येन वेदनेन तत्ततो न भिद्यते यथात्मज्ञान
स्यात्मा वेद्यंते च भूतभौतिकानीति विरुद्धव्याप्तोपल
ब्धिः निषेध्यभेदविरुद्धेनाभेदेन व्याप्तं वेद्यत्वं दृश्य
माने स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं भेदं प्रति
क्षिपतीति २ तथा यद्येन नियतसहोपलंभं तत्ततो न भिद्य
ते यथैकस्माच्चंद्रात् द्वितीयश्चंद्रः नियतसहोपलंभश्चा
र्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः निषेध्यभेद
व्यापकानियमविरुद्धो नियमोऽनियमं निवर्तयं
स्तद्व्याप्तं भेदं प्रतिक्षिपतीति स्यादेतदर्थश्चेन्न भिन्नो
ज्ञानात् कथं भिन्नवत्प्रतिभासत इत्यत आह कल्पि
तमिति यथाहुर्वैनाशिकाः सहोपलंभनियमादभे
दो नीलतद्धियोः भेदश्च भ्रांतिविज्ञानैर्दृश्यत इंद्राविवा
द्वय इति कल्पितत्वं विशदयति ज्ञानपरिकल्पनेति
निराकरोति तेदूतितेकथं अन्धेयवन्वनाः स्युरिति सं
बंधः प्रतिज्ञानमुपस्थितं प्रत्युपस्थितं कथं तथेति य
था यथावभासते इदंकारास्पदत्वेन तथा तथा स्वयमु
पस्थितं न तु कल्पनोपकल्पितं विज्ञानविषयतापन्नं स्वमहात्म्येनेति कारणत्वं विज्ञानं प्रत्यर्थस्य दर्श
यति यस्मादर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानमत्र
जनितस्मादर्थस्य ग्राहकं तदेवंभूतं वस्तु कथमप्र
माणात्मकेन विकल्पविज्ञानबलेन विकल्पस्याप्रा
माणिकत्वात् तद्बलस्यापि तदात्मनोऽप्रमाणात्मक

त्वेतेनवस्तुस्वरूपमुत्सृज्योपस्तंकृत्वाउपगृह्येति
कश्चित्पाठः तत्रापिसएवार्थः तदेवापलपंतःश्रद्धात
व्यवच्चनाःस्युरिति इदमत्राकूतं सहोपलंभानियम
श्ववेद्यत्वंचहेतुसंदिग्धव्यतिरेकतया नैकांतिको
तथाहिज्ञानाकारस्य भूतभौतिकादेर्यदेतत् बाह्य
त्वंस्थूलत्वंच भासते नतेज्ञानेसंभवतः तथाहिनाना
देशव्यापितास्थौल्यं विछिन्नदेशताचबाह्यत्वं नचै=
कविज्ञानस्य नानादेशव्यापिताविछिन्नदेशताचो=
पपद्यते तद्देशत्वात्तद्देशत्वलक्षणविरुद्धधर्मसंसर्ग
स्यैकत्रासंभवासंभवेवात्रैलोक्यस्यैकत्वप्रसंगात्
अतएवास्तु विज्ञानभेदइतिचेत् हंतभोःपरमसू=
क्ष्मगोचराणां प्रत्ययानां परस्परवार्तानभिज्ञानांस्व
गोचरमात्रजागरूकाणांकुतस्त्योयंस्थूलावभासः
नच विकल्पगोचराभिलापःसंसर्गाभावात् नचस्थू
लमालोचितं यतस्तदुपाधिकस्य विशदताभवेत्तस्य
स्वभाविनः नचाविकल्पवत् विकल्पोपि स्वाकारमा
त्रगोचरः तस्यचास्थूलत्वात् नस्थूलगोचरोभवितुम
र्हति तस्माद्बाह्येच प्रत्ययेस्थूलस्य बाह्यस्यचासंभ=
वादलीकमेतदास्थातव्यं नचालीकं विज्ञानादभि
न्नं विज्ञानस्यतद्वत् तुछत्वप्रसंगात् तथाच वेद्यत्व=
स्याभेदव्याप्यत्वाभावात् कुतोभेदप्रतिपक्षत्वंसहो
पलंभनियमश्चसदसतोरिव विज्ञानस्थौल्ययोःस

तोऽपिस्वभावाद्व्याकुतश्चित्प्रतिबंधाद्दोपपद्यते त
स्मादनैकांतिकत्वादेतौ हेत्वाभासौ विकल्पमात्रमे
वबाध्याभावे प्रस्तुवातेन च प्रत्यक्षमाहात्म्यं विकल्प
मात्रेणाऽपोह्यते तस्मात्साधूक्तं कथमप्रमाणात्मके
न विकल्पज्ञानबलेनेति एतेन प्रत्ययत्वमपि स्वप्ना
दिप्रत्ययदृष्टांतेन निरालंबतत्वसाधनमपास्तं प्रमे
यविकल्पस्त्ववयवि व्यवस्थापनेन प्रत्युक्तः विस्त
रस्तु न्यायकणिकायामनुसरणीय इति तदिह कृ
तं विस्तरेणेति ३ तदेवमुत्सूत्रभाष्यकृद्विज्ञानाति
रिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति कु
तश्चैतदिति वस्तुपंथाः यन्नानात्वे यस्यैकत्वं तत्ततो
स्यंतं भिद्यते यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्त
विष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते ज्ञाननानात्वेपि चा
र्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः अभेदश्चार्थ
स्य ज्ञानभेदेपि प्रमातॄणां परस्परप्रतिसंधानादव
सीयते अस्ति हि रक्तद्विष्टविमूढमध्यस्थानमेक
स्यां योषिति प्रतीयमानायां प्रतिसंधानं या त्वया दृ
श्यते सैव मयापीति तस्माद्वस्तुसाम्ये चित्तभेदा
त् ज्ञानभेदात्तयोरर्थज्ञानयोर्विभक्तः पंथाः स्वरूप
भेदोपायः सुखज्ञानं कांतायां कांतस्य सपत्नीनां दुः
खज्ञानं चैत्रस्य तामविंदतो मूढज्ञानं विषादः स्यादे
तत् यद्येकस्य चित्तेन परिकल्पितः कामिनीलक्षणो

र्थः तेनैवान्येषामपिचित्तमुपरज्यते इतिसाधारणमु
पपद्यतेइत्यतआह नचान्येति तथासत्येकस्मिन्नी
लज्ञानवति सर्वएव नीलज्ञानवंतःस्युरिति नन्वः
र्थवादिनामप्येकोर्थः कथंसुखादिभेदभिन्नविज्ञान
हेतुर्नत्वविलक्षणात्कारणात्कार्यभेदोयुक्तइत्यतआ
हसांख्यपक्षइति एकस्यैवबाह्यस्यवस्तुनस्त्रैगुण्य
परिणामस्य त्रैरूप्यमुपपन्नम् एवमपिसर्वेषामवि
शेषेण सुखदुःखमोहात्मकंविज्ञानंस्यादित्यतआ
ह धर्मादिनिमित्तापेक्षंरजःसहितंसत्त्वंधर्मापेक्षं
सुखज्ञानंजनयति सत्त्वमेवतु विगतरजस्कं विद्या
पेक्षं माध्यस्थ्यज्ञानमिति तेच धर्मादयोनसर्वेसर्व
त्रपुरुषेसंति किंतु कश्चित्क्वचिदिति अभ्युपपन्ना
व्यवस्थेति अत्रकेचिदाहुःप्रावादकाः ज्ञानसहभूरेवा
र्थोभोग्यत्वात्सुखादिवदिति एतदुक्तंभवति भवत्वर्थो
ज्ञानात् व्यतिरिक्तःतथाप्यसौजडत्वात् नज्ञानमंतरे
णशक्यःप्रतिपत्तु ज्ञानेनतुभासनीयःतथाच ज्ञानः
समयएवास्तितान्यदाप्रमाणाभावादिति तदेतदु
त्सूत्रंतावद्दूषयति भाष्यकारःतएतया द्वारेतिवस्तु
खलुसर्वेचित्तसाधारणमनेकक्षणपरंपरोह्यमानं
परिणामात्मकमनुभूयते लौकिकपरीक्षकैःतच्चेः
द्विज्ञानेन सहभवेत् न्यूनमेवंविधमेवच्चेदिदमंश
स्योपरिक्तोयमनरोधोयेनसोपिनापन्हूयेतेस्यर्थः

मानाभूदिदमंशस्यापन्हवोज्ञानसहभूरेवास्त्वर्थः तत्रा
प्याह नचैकंकिंस्यात् यद्विघटग्राहिचित्तंतद्यदा पट
द्रव्यव्यग्रतया नघटेवर्त्तेते यद्वा विवेकविषयमासी
त् तदेवच्च निरोधंसमापद्यतेतदा घटज्ञानस्य वा वि
वेकज्ञानस्य वा अभावाद्विवेकोवा घटोवा ज्ञानभे
दमाजीवन स्तन्नाशान्नष्टएव स्यादित्याह एक
चित्तेति किं ततस्यात् नस्यादित्यर्थः ४ संबध्यमानं
चचित्तेनतद्वस्तुविवेकोवा घटोवा कुतउत्पद्येतनि
यतकारणान्वय व्यतिरेकानुविधायिभावानिहिका
र्याणिनस्वकारणमतिवर्त्यकारणांतराद्भवितुमीश
तेमाभूदकारणत्वे तेषांकादाचित्कत्वव्याघातः नन्व
तज्ज्ञानकारणमेवतत्कारणमितियुक्तं आशामोद
कस्यमोदकस्य चोपयुज्यमानस्य रसवीर्यविपाका
दिसाम्यप्रसंगात् तस्मात्साधूक्तं संबध्यमानंवापुन
श्चित्तेनेति अपिचयेयोऽर्वाग्भागः ससर्वोमध्यपरः
भागव्यासः ज्ञानाधीने सद्भावेत्वस्याननुभूयमानत्वा
न्मध्यपरभागौ नस्तइतिव्यापकाभावादर्वाग्भा
गोपिनस्यात् इत्यर्थोभावात् कुतोज्ञानसहभूरर्थ
इत्याह येचास्येति अनुपस्थिताअज्ञाताः उपसंहर
ति तस्मादिति सुगमंशेषंस्यादेतत् अर्थश्चेत्स्वतंत्रः
सचजडस्वभावइति नकदाचित्प्रकाशेत प्रकाशने
वाजडत्वमप्यस्यापगतमितिभावोप्यपगच्छेत् नजा

तुस्वभावमनपहायभावोवस्तितुमर्हतिनचेंद्रियाद्याधेयोजडस्वभावस्यार्थस्य धर्मःप्रकाशनइतिसांप्रतम् अर्थधर्मत्वेनीलत्वादिवत् सर्वपुरुषसाधारणइत्येकःशास्त्रार्थज्ञइति सर्वएवविद्वांसःप्रसज्येरन् नजातुःकश्चिदस्तिनचातीतानागतयोर्धर्मःप्रत्युत्पन्नोयुक्तः तस्मात्स्वतंत्रोर्थउपलंभविषयइतिमनोरथमात्रमेतदित्यतआह तदुपरागंजडस्वभावोप्यर्थइंद्रियप्रनाडिकयाचित्तमुपरंजयति तदेवंभूतं चित्तदर्पणमुपसंक्रांतप्रतिबिंबाचितिशक्तिश्चित्तमर्थोपरक्तंचेतयमानार्थमनुभवतिनत्वर्थे किंचित् प्राकट्यादिकमाधत्तेनाप्यसंबद्धाच्चित्तेनतस्यतिविंबसंक्रातेरसक्तत्वादितियद्यपिच सर्वगतत्वाच्चित्तस्यचेंद्रियस्याहंकारिकस्य विषयेणास्तिसंबंधः तथापि यत्रशरीरेवृत्तिमच्चित्तंतेनसहसंबंधोविषयाणामित्ययस्कांतमणिकल्पा इत्युक्तअयःसधर्मकंचित्तमितिइंद्रियप्रनाडिकयाभिसंबध्योपरंजयति अतएवचित्तंपरिणामीत्याहवस्तुनइति तदेवंचित्तव्यतिरेकिणमर्थमवस्थाप्यतेभ्यःपरिणतिधर्मकेभ्योव्यतिरिक्तमात्मानमादर्शयितुतदेधर्म्यपरिणामित्वमस्यवक्तुंपूरयित्वासूत्रंपठति यस्यतुतदेववित्तंविषयस्तस्यसदापरिणामित्वात् क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितंचित्तमानिरोधात्सर्वदापुरुषेणानुभूयते वृत्तिमत् तत्कस्यहेतोः

यतःपुरुषोपरिणामीऽपरिणामित्वे च्चित्तवत्पुरुषोपि
ज्ञाताज्ञातविषयोभवेत् ज्ञातविषयएवत्वयं तस्मा
दपरिणामीततश्च परिणामिभ्योतिरिच्यते इति तदेत
दाह यदिचित्तवदिति सदाज्ञातत्वंतु मनसः सत्वविक
स्यतस्यय:प्रभुःस्वामीभोक्तेतियावत् तस्यप्रभोः पुरु
षस्यापरिणामित्वमनुभापयतितथाचापरिणामिनस्त
स्यपरिणामिनश्चित्तात् पुरुषस्यभेद इतिभावः अत्र
वैनाशिकमुत्थापयति स्यादाशंकेति अयमर्थःस्यादेवं
यदिचित्तमात्मनोविषयःस्यात् अपितुस्वप्रकाशमे
तत्विषयाभासं पूर्वचित्तंप्रतीत्यसमुत्पन्नंतत्कुतःपु
रुषस्यसदाज्ञातविषयत्वंकुतस्तरांवापरिणामितया
परिणामिनश्चित्ताद्भेद इति नतत्वात् भवेदेतदेवंयदि
स्वसंवेदनंचित्तंस्यान्नतत्वे तदस्तितद्धिपरिणामितया
नीलादिवदनुभवव्याप्यंयच्चानुभवव्याप्यंनतत् स्वा
भासंभवितुमर्हतिस्वात्मनिवृत्तिविरोधात् नहितदेव
क्रियाञ्चकर्मंच कारकंचनहिपाकःपच्यतेछिदावा
छिद्यतेपुरुषस्त्वपरिणामीनानुभवकर्मेतिनास्मिन्
स्वयंप्रकाशतानयुज्यतेअपराधान्नप्रकाशतोह्यस्य
स्वयंप्रकाशतानानुभवकर्मतातस्माद्दृश्यत्वात् दर्शन
कर्मचित्तं नस्वाभासंआत्मप्रकाशप्रतिबिंबितस्यैव-
च्चित्तस्य तद्वृत्तिविषयाःप्रकाशंत इतिभावः ननुदृश्यो
वि स्वयंप्रकाशश्चनहियथाघटादयोग्निनाव्यज्यंते

एवमग्निरग्न्यंतरेणेत्यत आह नचाग्निरत्रेतिकस्मात् न
हीतिभानामाग्निरत्यंतरात् प्रकाशिष्टविज्ञानान्तुप्रका
शतइतिनस्वयं प्रकाशइतिन व्यभिचारइत्यर्थः प्र-
काशश्चायमिति अयमिति पुरुषस्वभावात्प्रकाशं
व्यवच्छिनत्ति क्रियारूपःप्रकाशइतियावत् एतदुक्तं
भवतियायाक्रियासासासर्वाकर्तृकरणकर्मसंबंधे
नदृष्टायथापाके दृष्टश्चैत्राग्नितंडुलसंबंधेनतथा
प्रकाशेपिक्रियेति तथापितथाभवितव्यं संबंधश्च भे
दाश्रयोनाभेदेसंभवतीत्यर्थः किंचस्वाभासंचित्तमित्य
स्याप्यमेवकस्यचिदितिशब्दार्थः स्यादेतत् माभूत्ग्रा
ह्यंचित्तंनहिग्रहणस्याकारणस्याव्यापकस्यचनिवृत्तौ
चित्तनिवृत्तिरित्यत आह स्वबुद्धेति बुद्धिश्चित्तंप्रचारा
व्यापाराःसर्वाःप्राणिनश्चित्तस्यवृत्तिभेदाःक्रोधलोभाद
यःस्वाश्रयेणचित्तेनस्वविषयेणचसहप्रत्यात्ममनुभूय
मानाश्चित्तस्याग्राह्यतांविघटयंतीत्यर्थः स्वबुद्धिप्रचा
रप्रतिसंवेदनमेवनिशदयति क्रुद्धोहमिति एकरणं
स्वाभासंविषयाभासं चित्तमिति ब्रुवाणोनतावद्वेनैव
व्यापारेणात्मानमवधारयति तेनैवविषयमपीतिवक्त-
ुमर्हति नह्यविलक्षणोव्यापारः कार्यभेदायपर्याप्तात
स्माद्व्यापारभेदोंगीकर्तव्यः नचवैनाशिकानामुत्पत्तिभे
दातिरिक्तोस्तिव्यापारः नचैकस्याएवोत्पत्तेरविलक्षणा
याःकार्यवैलक्षण्यसंभवः तस्याकस्मिकत्वप्रसंगात् व

चैकस्योत्पत्तिद्वयसंभवः तस्मादर्थस्यचज्ञानरूपस्य
चावधारणंनैकस्मिन्समयइति तदेतद्भाष्येणोच्यते
नचैकस्मिन्क्षणेइति तथाचोक्तंवैनाशिकैःभूतिर्येषां
क्रियासैवकारकंसोच्यतइति तस्माद्दृश्यत्वमेतच्चित्त
स्य सदातनं स्वाभासत्वमपनयत् द्रष्टारंच द्रष्टुरपरि
णामित्वंचदर्शयतीतिसिद्धं पुनर्वैनाशिकमुत्थापयति
स्यान्मतिःमाभूद्दृश्यत्वेनस्वसंवेदनं एवमप्यात्मान
सिद्ध्यति स्वसंतानवर्त्तिनाचरमचित्तक्षणेनस्वरस
निरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थःसमंचतत
ज्ञानत्वेनानंतरंचाव्यवहितत्वेन समनंतरंतेन चि
त्तबुद्धिरितिचित्तमित्यर्थः नागृहीताचरमाबुद्धिःपू
र्वबुद्धिग्रहणसमर्थानहिबुद्ध्यासंबद्धापूर्वाबुद्धिर्बु

मुथित चितेः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चिति
प्रतिबिंबाधारतया तद्रूपतापत्तौ सत्यां यथाहि चंद्रमसः
क्रियामंतरेणापि संक्रांतचंद्रप्रतिबिंबमंडलं चलमच
लं चलमिव आलबालमरालमिव चंद्रमसमवभासय
ति एवं विनापि चितिव्यापारं उपसंक्रांत चितिप्रतिबिं
बं चित्तं स्वगतया क्रियया क्रियावतीमसंगतामपि मः
यि संगतां चितिशक्तिमवभासयत् भोग्यभावमासाद
यत् भोक्तृभावमापादयति तस्मादिति सूत्रार्थः भाष्यम
प्येतदर्थमसकृत्तत्र तत्र व्याख्यातं इति न व्याख्यातमत्र
बुद्धिवृत्त्यविशिष्टत्वेन ज्ञानवृत्तेरागममुदाहरति तथाचो
क्तं नपातालमिति शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्व
भावस्य चितिछायां मनोवृत्तिमेव चितिछायापन्नत्वाच्चि
तेरप्यविशिष्टां गुहां वेदयंते तस्यामेव गुहायां तद्ब्रह्म
ब्रह्म तदपनयेतु स्वयंप्रकाशमनावरणमनुपसर्गं प्र
द्योतनेचरमदेहस्य भगव ति तदेवं दृश्यत्वेन चित्त
स्य परिणामिनस्तद्व्यतिरिक्तः पुमानपरिणतिधर्मोपपा
दितः संप्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति अतश्चैतदि
ति अवश्यंचैतदित्यर्थः द्रष्टृर्थं यथाहि नीलाद्यनुरक्त
चित्त नीलाद्यर्थं प्रत्यक्षेणैवावस्थापयति एवं दृष्टछाया
पत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति
अस्ति हि आकारज्ञान नीलमहं संप्रत्येमि इति तस्मात्
देववत् ज्ञातापि प्रत्यक्षसिद्धोपि न विनिच्यावस्थापिः

तो यथाजले चंद्रमसो विंबं न लेतावतात द्वत्सदनंचा
स्यजलगतले तद्प्रमाणमिति चंद्ररूपेप्यप्रमाणं भवि
तुमर्हति तस्माच्चित्तप्रतिबिंबितया चैतन्यगोचरा
पिनचैतन्यगोचरेति तदिदंसवार्थत्वंचित्तस्येति त
देतदाह मनोहीति नकेवलंतदाकारापत्तामंतव्येना
र्थेनोपरक्तंमनः अपितु स्वयंचेति चकारोभिन्नक्रमः
पुरुषेणेत्यस्यानंतरंद्रष्टव्यः तच्छायापत्तिः पुरुषस्यव
त्तिः इयंच चैतन्यच्छायापत्तिश्चित्तस्यवैनाशिकैरभ्युपे
तव्या कथमन्यथा चित्ते चैतन्यमेते आरोपयांबभूवु
रित्याह तदनेनेति केचिद्वैनाशिका बाह्यार्थवादिनः
अपरे विज्ञानमात्रवादिनः ननु यदि चित्तमेवद्रष्ट्र
कारंदृश्याकारंदृत्तचित्तादभिन्नावेवास्तां द्रष्टृदृ
श्यौयथाहुः अभिन्नोपिहिबुद्ध्यात्मा विपर्यासितदर्श
नैः ग्राह्यग्राहकसंवित्तिभेदवानिवलक्ष्यत इति त
त्कथमेतेनुकंपनीया इत्यत आह समाधिप्रज्ञायामि
ति तेखलूक्ताभिरुपपत्तिभिश्चित्तातिरिक्तं पुरुषम
भ्युपगम्याप्यष्टांगयोगोपदेशेन समाधिप्रज्ञायामा
त्मगोचरायामवतार्य बोधयितव्याः तद्यथासमा
धिप्रज्ञायांप्रज्ञेयोर्थ आत्मा प्रतिबिंबीभूतोन्यः क
स्मात् तस्यात्मनः आलंबनीभूतत्वात् अथचित्ताद
भिन्नमेव कस्मान्नालंबनं भवतीति यदि युक्तिबोधि
तोपि नेजात्याद्ददत् तत्र हेतनाह सचेदात्मरूपे

यश्चित्तमात्रंस्यात् तत्तुततोव्यतिरिक्तः ततःकथंप्रत्ययैव
प्रज्ञारूपमवधार्येत स्वात्मनिवृत्तिविरोधात् उपसंहर
ति तस्मादिति समीचीनोपदेशेनानुकंपितामवंती
त्याह एवमेतदिति जातितःस्वभावएवइत्यर्थः चित्ता=
तिरिक्तात्मसद्भावेहेत्वंतरमवतारयति कुतश्चेतित
दसित्वात् यद्यप्यसंख्येयाःकर्मवासनाः क्लेशवासना
श्च चित्तमेवाधिशेरतेनतुपुरुषंतथाच्चवासनाधीना
विपाकाश्चित्ताश्रयतयाचित्तस्यभोक्तृतामावहंतिभो
क्तृत्वैचभोग्यमितिसर्वेचित्तार्थप्रासंतथापि नच्चित्त
मसंख्येयवासनाविचित्रमपिपरार्थंकस्मात्संहत्य=
कारित्वादितिसूत्रार्थः व्याचष्टेतदेतदिति स्यादेतच्चि=
त्तंसंहत्यापिकरिष्यतिस्वार्थंच भविष्यतिकःखलुवि
रोधइतियदिकश्चिद्ब्रूयात्तंप्रत्याह संहत्यकारिणेति
सुखच्चित्तमितिभोगमुपलक्षयतितेनदुःखच्चित्तमपि
द्रष्टव्यं ज्ञानमित्यपवर्गेउक्तः एतदुक्तम् भवति सु
ख दुःखे चित्ते प्रतिकूलानुकूलात्मकेनात्मनिसंभ
वतःस्वात्मनिवृत्तिविरोधात् नचान्योपिसंहत्यका
री साक्षात्परंपरयावा सुखदुःखे विदधानस्ताभ्याम
नुकूलनीयः प्रतिकूलनीयोवा तस्माद्यःसाक्षात्परं=
परयावा नसुखदुःखयोर्व्याप्रियतेसएवाभ्यामनुकू
लनीयःप्रतिकूलनीयोवा सच नित्योदासीनःपुरुषः
एवमपवृज्यते येनज्ञानेनतस्यापितेनेयप्तलंत्रत्वात्=

स्वात्मनिच वृत्तिविरोधान्नज्ञानार्थत्वनन्वान्यविष=
यादस्मादप्रवर्तसंभवोविदेहप्रकृतिलयानामववन्न
र्मासंभवात् तस्मात्तत्ज्ञानमपिपुरुषार्थमेवनतत्
स्वार्थनापिपरमात्मार्थसंहतपरार्थत्वेचानवस्थाप्रसं
गादसंहतपरार्थसिद्धिरिति तदेवंकैवल्यमूलबीजंयु
क्तिमयमात्मदर्शनसुक्त्वातदुपदेशादिकृतंपुरुष=
मनधिकृतपुरुषांतराद्व्यावृत्तमाह विशेषनिवृत्तिःय
स्यात्मभावेभावनास्तितस्याष्टांगयोगोपदेशाद्नुति
ष्टतोयुंजानस्यतत्परिपाकात् चित्तसत्वपुरुषयोर्विशे
षदर्शनादात्मभावभावनानिवर्त्तते यस्यात्मभावभाव
नैवनास्तिनास्तिकस्यतस्योपदेशानधिकृतस्यापरि
निश्चितात्मतत्परलोकभावस्यनोपदेशानविशेषदर्श
नेनात्मभावभावनानिवृत्तिरितिसूत्रार्थः नन्वात्मभा
वभावनायाःचित्तवर्त्तिन्याःकुतोवागमइत्यतआह
यथाप्रावृषीतिप्राग्भवीयंतत्वदर्शनबीजमपवर्गभा=
गीयंयत्कर्माष्टांगयोगानुष्ठानं तदेकदेशानुष्ठानंवातत्
भिनिर्वर्तितमस्तीत्यनुमीयतेतस्यचात्मभावनातश्य
मेवस्वाभाविकीवस्त्वभ्यासंविनापिप्रवर्ततेत्रअनधिका
रिणमाममिनावचनेनदर्शयति यस्याभावादिदमिविपू
र्वेपक्षःनास्तिकर्मफलंपरलोकिनोभावात्परलोका=
भावइतितत्र रुचिररुचिश्चनिर्णयेपंचविंशतितत्त्व
विषयेत्रआत्मभावभावनाप्राग्व्याख्यानाविशेषदर्शिनः

परामर्शमाह चित्तस्येवेति तस्यविशेषदर्शिनकुशल
स्यात्मभावभावनाविनिवर्ततेइति अथविशेषदर्शि
नः कीदृशंचित्तमित्यतआह तदाचित्तंनिगदव्याख्या
तम् स्यादेतद्विशेषदर्शनंचेद्विवेकनिष्ठंनजातुचि-
त्तंव्युत्थितंस्याद्दृश्यतेचास्यभिक्षामटतो व्युत्थितमित्य
तआह तेभ्यः प्रत्ययेति प्रतीयतेयेन सप्रत्ययश्चित्त
सत्वंतस्माद्विवेकश्चित्तेः तेननिम्नस्यजानामीतिसा
क्षात्मोक्षेऽविविच्यदर्शितोनजानामीति मोहस्तन्मू
लावहंकारममकारावहमस्मीतिवा ममेतिदर्शिनो
क्षीयमाणानिच तानिबीजानिचेतिसमासः पूर्वसं-
स्कारेभ्योव्युत्थानसंस्कारेभ्यः स्यादेतत् सत्यपिविवे
कज्ञानेव्युत्थानसंस्कारायदिप्रत्ययांतराणिप्रसुवते-
कस्तर्हि दानहेतुरेतेषां यतःप्रत्ययांतराणि नपुनःप्र
सवीरन्नित्यतआह हानमेषां अपरिपक्वविवेकज्ञान
स्याक्षीयमाणाव्युत्थानसंस्काराः प्रत्ययांतरं प्रसुवतेन
तु परिपक्वविवेकज्ञानस्यक्षीणाःप्रत्ययांतराणिप्रस्तो
तुमर्हंति यथा विवेकछिद्रसमुत्पन्नाअपिक्लेशानसं
स्कारांतरंप्रसुवते तत्कस्यहेतोः तदेते क्लेशाविवेक-
ज्ञानवह्निदग्धबीजभावाइति एवं व्युत्थानसंस्का
राअपीति अथ व्युत्थानसंस्काराविवेकज्ञानसंस्कारै
र्निरोद्धव्याः विवेकसंस्काराश्च निरोधसंस्कारैर्निरोध
संस्काराणांत्ववाप्तविषयत्वं दर्शितंनिरोधोपायः प्रा

यश्चिंतनीयस्तत्राह ज्ञानसंस्कारास्त्विति परवैरा
ग्यसंस्कारा इत्यर्थः तदेवं सूत्रकारोव्युत्थाननिरोधोपा
यंप्रसंख्यानमुक्त्वा प्रसंख्याननिरोधोपायमाह प्रसमा
धि॰ ततःप्रसंख्यानान्न किंचित् सर्वभावाधिष्ठातृत्वा
दिप्रार्थयते प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदो=
षदर्शनेनविरक्तः सर्वथाविवेकख्यातिरेवभवति ए
तदेव विवृणोति तत्रापीति यदा व्युत्थानप्रत्ययाभावे
षु॰ तदानायंब्राह्मणःसर्वथा विवेकख्यातिः यतस्त=
स्यनप्रत्ययांतराणिभवंतिततः सर्वथा विवेकख्या=
तिरिति तदास्यधर्ममेघःसमाधिर्भवति एतदुक्तंभव
ति प्रसंख्यानेविरक्तस्तन्निरोधमिच्छन् धर्ममेघसमा
धिमुपासीत तदुपासनेच सर्वदा विवेकख्यातिर्भव
ति तथाच तन्निरोद्धुंपारयतीति तस्यच प्रयोजनमा
ह ततः तिःकस्मात्पुनर्जीवन्नेव विमुक्तोभवतिउत्त=
रं यस्माद्विति क्लेशकर्मवासेद्धः किलकर्माशयोजात्या
दिनिदानं नचासति निदाने निदानीभवितुमर्हतिय
थाहात्र भगवानक्षपादःवीतरागजन्मादर्शनादिति
अथैवं धर्ममेघेसति कीदृशंचित्तमित्यतआह तदा
सर्वात्मं आव्रियते चित्तसत्त्वमेभिरिति आवरणानि
मलाःक्लेशकर्माणिसर्वेचते आवरणमलाश्चेति स=
र्वावरणमलाः तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य=
ज्ञायतेनेनेति अनया व्युत्पत्त्या आनंत्यादपरिमेय=

सात् ज्ञानमल्पम् यथाहि शरदि घनपटलमुक्तचंद्रा=
न्विषः परितः प्रद्योतमानस्य प्रकाशानंत्यात्सकाश्याः घ
टाद्योल्पाः प्रकाशंते एवमुपगरजस्तमस = = =
श्चित्तसत्वस्य प्रकानंत्यादल्पंप्रकाश्यमिति तदेतदाह
सर्वैरिति एतदेव व्यतिरेकमुखेनस्फोरयति आवर
केण तमसाभिभूतमिति क्रियाशीलेन रजसा प्रवर्त्ति
तमतएवोद्घाटितं प्रदेशादपनीततमइत्यर्थः अतए
व सर्वान् धर्मान् ज्ञेयान् मेहति वर्षति प्रकाशनेने
ति धर्ममेघइत्युच्यते नन्वयमस्तु धर्ममेघः समाधिः
सवासनक्लेशकर्माशयप्रशमहेतुः अथ सत्यप्यस्मि=
न्कस्मात् नजायते पुनर्जंतुरित्यतआह यत्रेदमुक्त=
मिति कारणसमुच्छेदादपिचेत्कार्यंक्रियते हंतभोः म=
णिवेधादयोधादिभ्योभवेयुःप्रसक्ताः तथाचानुपपन्ना
र्थतायामाभाणकोलौकिकउपपन्नार्थः स्यात् अवि=
ध्यदंधोमणिमिति आवयत् ग्रथितवान्प्रत्यमुंचत् पि
नद्धवान् अभ्यपूजयत् स्तुतवानिति ननु धर्ममेघ=
स्य पराकाष्ठाज्ञानप्रसादमात्रं परं वैराग्यं समूलया
तमपहंतु व्युत्थानसमाधिसंस्कारान् क्लेशकर्माशया
न् गुणास्तु स्वतएव विकारकरणशीलाः कस्मात्ताद=
शमपिपुरुषं प्रतिदेहेंद्रियादिनारभंतइत्यतआह
ततोगुणानांशीलमिदंगुणानां परमीयंप्रतिकृतार्थास्तं
प्रति नप्रवर्त्ततेइतिभावः अत्रांतरेपरिणामक्रमंपृच्छ

ति अथ कोयमिति क्षणक्रमः परिणामक्रमः क्षणप्रति-
योगीक्षणः प्रतिसंबधी यस्यसतथोक्तः क्षणप्रचयाश्र
यइत्यर्थः नजातुक्रमः क्रमवंतमंतरेणशक्योनिरूपयि
तुनचैकस्यैवक्षणस्यक्रमः तस्मात्क्षणप्रचयाश्रयः प
रिशिष्यते तदिदमाह क्षणानंतर्येति परिणामक्रमे प्र-
माणमाह परिणामस्येति नजस्यहि वस्त्रस्य प्रयत्न सं
रक्षितस्यापिचिरेण पुराणतादृश्यते सोयंपरिणामस्या
परांतः पर्यवसानं तेनहिपरिणामस्यक्रमः ततः प्राग
पिपुराणतायाः सूक्ष्म सूक्ष्मतरसूक्ष्मतम स्थूलतमत्वा-
दीनांपौर्वापर्य्यमनुमीयते एतदेव व्यतिरेकमुखेनद
र्शयति नहीति अननुभूतोऽप्रातः क्रमक्षणोपयासात्त
थोक्तानन्चेपक्रमः अंत्यानस्यनसंभवति तस्यनित्यत्वादि

रूपेणपरिणामादस्तुपरिणामक्रमः पुरुषस्यत्वपरि-
णामिनःकुतःपरिणामक्रमइत्यतआह कूटस्थेति
तत्र बद्धानां चित्ताव्यतिरेकाभिमानात्तत्परिणामाध्या
सः मुक्तानांचास्ति क्रियामुपादायावास्तवोपिपरिणा
मोमोहकल्पितःशब्दस्यपुरःसरतयातत्स्पष्टो विक-
ल्पोस्तिक्रियामुपादत्त इतिगुणेष्वलब्धपर्यवसानः
परिणामक्रमइत्युक्तं तदसहमानंपृच्छति अथेतिस्थि
त्येति महाप्रलयावस्थायां गत्येति सृष्टौ एतदुक्तंभ
वति यथानंत्यात्परिणामसमाप्तिः संसारस्य हंतभोः
कथंमहाप्रलयसमयेसर्वेषामात्मनां सहसासमुच्छि
द्येतकथंचसृष्ट्यादौसहसोत्पद्येतसंसारः तस्मादेकैक
स्यात्मनोमुक्तिक्रमेणसर्वेषांविमोक्षादुच्छेदः सर्वेषांसं
सारक्रमेणेति प्रधानपरिणामपरिसमाप्तिः एवंचप्र-
धानस्याप्यनित्यत्वप्रसंगः नचापूर्वसत्त्वप्रादुर्भावइ
ष्यते येनानंत्यंस्यात् तथासत्यनादित्वव्याहतेःसक
लशास्त्रार्थभंगप्रसंगइतिभावः उत्तरमाह अवचनी
यं अनुत्तराहमेतत् एकांततएव तस्यावचनीयतांद
र्शयितुमेकांतवचनीयं प्रश्नंदर्शयति अस्तिप्रश्नइति
सर्वोजातोमरिष्यतीतिप्रश्नोत्तरम् ॐ भोइतिसत्यंभोइ
त्यर्थः अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयंप्र
श्नमाह अथसर्वइति विभज्यवचनीयतामाह विभ
ज्येति विभज्यवचनीयमेवप्रश्नांतरं निस्पष्टार्थमाह

तथामनुष्येति अयंत्ववचनीयएकांततः नहिसामान्ये
नकुशलाकुशलपुरुषसंसारस्यानुवक्तृत्वमनंतत्वंवा
शक्यमेकांततोवक्तुं यथाप्राणभृन्मात्रस्यश्रेयस्त्वम
श्रेयस्त्वंवा नैकांततः शक्यमवधारयितुं यथा जात
मात्रस्य मरणमेकांततो विभज्य पुनःशक्यावधारणमि
त्याह कुशलस्येति अयमभिसंधिः क्रमेणमोक्षेसर्वेषां
मोक्षात्संसारोच्छेद इत्यनुमानं तच्चागमसिद्धमोक्षाश्र
यंतथाचाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः
कथं तमेवागमं प्रधानविकारनित्यतायामप्रमाणीकु
र्यात् तस्मादागमबाधितविषयमेतदनुमानं नप्रमाणं
श्रूयतेहि श्रुतिस्मृतीतिहासपुराणेषुसर्गप्रतिसर्गपरं
पराया अनादित्वमनंतत्वंचेति अपिच सर्वेषामेवात्म
नांसंसारस्यनतावद्युगपदुच्छेदः संभवीनहिपंडित ः
पाणामप्यनेकजन्मपरंपराभ्यासपरिश्रमसाध्या विवे
कख्यातिप्रतिष्ठा किंपुनःप्राणभृन्मात्रस्यस्थावरजंगमा
देरेकदाऽकस्माद्भवितुमर्हति नचकारणायौगपद्येका
र्ययौगपद्यंयुज्यते क्रमेणतु विवेकख्यातावसंख्येयानां
क्रमेणमुक्तौनसंसारोच्छेदो नंतत्वाज्जंतूनामसंख्येय
त्वादितिसर्वमवदातं कैवल्यरूपावधारणपदस्यसूत्र
स्यावांतरसंगतिमाह गुणाधिकारेति पुरुषार्थशून्यानां
गुणानांप्रतिप्रसवः कैवल्यंस्वरूपप्रतिष्ठावाचितिशक्ति
रिति कृतकरणीयतया पुरुषार्थशून्यानां यः प्रतिप्रस—

स्वकारणेप्रधानेलयः तेषांकार्यकारणात्मनां गुणानांव्यु त्थानसमाधिनिरोधसंस्कारामनसिलीयंतेमनोऽस्मिता यांअस्मितालिंगेलिंगमलिंगेइति योयंगुणानांकार्यका रणात्मकानांप्रतिसर्गः तत्कैवल्यंयंकं चित्पुरुषंप्रतिप्र धानस्यमोक्षःस्वरूपप्रतिष्ठापुरुषस्यवामोक्षःइत्याह स्वरूपेति अस्तिहिमहाप्रलयेपिस्वरूपप्रतिष्ठाचिति शक्तिः नचासौमोक्षइत्यतआह पुनरिति सोत्रइति शब्दःशास्त्रपरिसमाप्तौ मुक्तयइहचित्तंपरलोकेमेयत त्सिद्धयोधर्मघनःसमाधिः द्वयोश्चमुक्तिःप्रतिपादिता स्मिन्पादेप्रसंगादपिचानन्यदुक्तं निदानंतापानामुदि तमथतापाश्चकथिताःसहांगैरष्टाभिर्विहितमिहयो गद्वयमपिकृतोमुक्तेरध्वागुणपुरुषभेदःस्फुटतरो वि विक्तंकैवल्यंपरिगलितताणचितिरसौ॥ ॥इतिश्रीवा चस्पतिमिश्रविरचितायांपातंजलभाष्यव्याख्यायांकै वल्यपादश्चतुर्थःसमाप्तः ४॥ १॥ ॥ १॥

